अथ चयः परस्मैभाषाः ।

षस, षस्ति, स्वप्ने । वश, कान्तौ । इत्युदात्ताः उदात्तेतः । चर्करीतं च ।

अथैक आत्मनेभाषः ।

ह्नुङ्, अपनयने । इत्यनुदात्तः ।

इति लुग्विकरणा अदादयः ॥

---

अथ जुहोत्यादिर्गणः

अथ चयः परस्मैभाषाः ।

हु, दानादनयोः । आदाने चेत्येके । ञिभी, भये । ह्री, लज्जायाम् । जुहोत्यादयो ऽनुदात्ताः ।

अथैकः परस्मैभाषः ।

पॄ, पालनपूर्णयोः उदात्तः । ह्रस्वान्तोयमित्येके ।

अथैक उभयतोभाषः ।

डुभृञ्, धारणपोषणयोः । अनुदात्तः ॥

अथ द्वावात्मनेभाषौ ।

माङ्, माने शब्दे च । ओहाङ्, गतौ ।

अथैकः परस्मैभाषः ।

ओहाक्, त्यागे । अनुदात्तः ॥

अथ द्वावुभयतोभाषौ ॥

डुदाञ्, दाने । डुधाञ्, धारणपोषणयोः । अनुदात्तौ ।

अथ त्रय उभयतोभाषाः।

णिजिर्, शौचपोषणयोः। विजिर्, पृथग्भावे। विष्लृ, व्याप्तौ। इति णिजादयोऽनुदात्ताः स्वरितेतः ॥

अथ गणान्ताः परस्मैभाषाश्छन्दसाश्चैकादश ॥

घृ, क्षरणदीप्त्योः। हृ, प्रसह्यकरणे। ऋ, सृ, गतौ। इति घ्रादय श्चत्वारोऽनुदात्ताः ॥

भस, भर्त्सनदीप्त्योः। उदात्त उदात्तेत्। कि, ज्ञाने। अनुदात्तः। तुर, त्वरणे। धिष, शब्दे। धन, धान्ये। जन, जनने। तुरादय उदात्ता उदात्तेतः। गा, स्तुतौ अनुदात्तः। छन्दसि

वृत्। इति श्लु विकरणा जुहोत्यादयः ॥

---

अथ दिवादिर्गणः ॥

—:॰:—

अथ दिवादयः षड्विंशतिः परस्मैभाषाः ॥

दिवु, क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु। षिवु, तन्तुसन्ताने। स्रिवु, गतिशोषणयोः। ष्ठिवु, निरसने। स्नुसु, अदने। आदान इत्येके। अदर्शन इत्यपरे। स्नसु, निरसने। क्नसु, ह्वरणदीप्त्योः। व्युष, दाहे। प्लुष, च। नृती, गात्रविक्षेपे। त्रसी, उद्वेगे। कुथ, पूतीभावे। पुथ, हिंसायाम्। गुध, परिवेष्टने। क्षिप, प्रेरणे। अनुदात्तः। पुष्प, विकसने। तिम, तीम, ष्टिम, ष्टीम, आर्द्रीभावे। व्रीड, चोदने लज्जायाञ्च इष, गतौ। षह, षुह, चक्यर्थे। जॄष्, झॄष्, वयोहानौ। इति दिवादय उदात्ता उदात्तेतः ॥

अथ द्वावात्मनेभाषौ ॥

षूङ्, प्राणिप्रसवे । दूङ्, परितापे । इत्युदात्तौ ॥

अथ दीङादय एकादश आत्मनेभाषाः ॥

दीङ्, क्षये । डीङ् विहायसा गतौ । धीङ्, आधारे । मीङ्, हिंसायाम् । रीङ्, स्रवणे । लीङ्, श्लेषणे । व्रीङ्, वृणोत्यर्थे । (वृत्) स्वादय ओदितः । पीङ्, पाने । माङ्, माने । ईङ्, गतौ । प्रीङ्, प्रीणने । इति दीङादय अनुदात्ता डीङ् तूदात्तः ॥

अथ चत्वारः परस्मैभाषाः ॥

शो, तनूकरणे । छो, छेदने । षो, अन्तकर्मणि । दो, अवखंडने । श्यतिप्रभृतयोनुदात्ताः ॥

अथ पंचदशात्मनेभाषाः ॥

जनी, प्रादुर्भावे । दीपी, दीप्तौ । पूरी, आप्यायने । तूरी, गतित्वरणहिंसनयोः । धूरी, गूरी, हिंसागत्योः । घूरी, जूरी, हिंसावयोहान्योः । शूरी, हिंसास्तंभनयोः । चूरी, दाहे । तप, ऐश्वर्ये वा वृतु, वरणे । क्लिश, उपतापे । काशृ, दीप्तौ । वाशृ, शब्दे । इति तपिवर्जमुदात्ता अनुदात्तेतः ।

अथ द्वावुभयतोभाषौ ।

मृष, तितिक्षायाम् । ईशुचिर्, पूतीभावे । उदात्तौ स्वरितेतौ ।

अथ त्रय उभयतोभाषाः ।

णह, बन्धने । रंज, रागे । शप, आक्रोशे । इत्यनुदात्ताः स्वरितेतः ।

अथैकादशात्मनेभाषाः ।

पद, गतौ । खिद, दैन्ये । विद, सत्तायाम् । बुध, अवगमने । युध, संप्रहारे । अनोरुध, कामे । अण, प्राणने । उदात्तः । मन, ज्ञाने । युज, समाधौ । सृज, विसर्गे । लिश, अल्पीभावे । इत्यनुदात्ता अनुदात्तेतः ।

अथ गणान्ता एकसप्ततिः परस्मैभाषाः ।

राधोऽकर्मकाद्वृद्धावेव । व्यध, ताडने । पुष, पुष्टौ । शुष, शो-
षणे । तुष,प्रीतौ । दुष, वैकृत्ये । श्लिष, आलिंगने । शक, विभा-
षितो मर्षणे । ञिष्विदा,गात्रप्रक्षरणे । क्रुध, क्रोधे । क्षुध, बुभुक्षा
याम् । शुध, शौचे । षिधु,संराद्धौ । इत्यनुदात्ता उदात्तेतः । रध,
हिंसासंराद्ध्योः । णश, अदर्शने । तृप, प्रीणने । दृप, हर्षणमोह-
योः । द्रुह, जिघांसायाम्।मुह,वैचित्त्ये । स्नुह,उद्गिरणे । ष्णिह,
प्रीतौ । वृत् रधादयः । इत्युदात्ता उदात्तेतस्तृपिदृपीत्वनुदात्तौ ।

अथ शमादयः ॥

शमु, उपशमे । तमु,कांक्षायाम् । दमु,उपशमे । श्रमु, तपसि
खेदे च । भ्रमु, अनवस्थाने । क्षमूष्, सहने । क्लमु, ग्लानौ ।
मदी, हर्षे । इत्यष्टौ शमादयः । असु, क्षेपणे । यसु, प्रयत्ने । जसु,
मोक्षणे । तसु, उपक्षये । दसु, च । वसु, स्तंभे । बशादिरित्येके ।
ओष्ठ्यादिर्दन्त्यान्तो व्युस् इत्यन्ये । अयकारं बुस् इत्यपरे । व्युष,
विभागे । प्लुष, दाहे । बिस, प्रेरणे । कुस, संश्लेषणे । बुस, उत्सर्गे ।
मुस, खंडने । मसी, परिणामे । समी इत्येके । लुठ, विलोडने
उच, समवाये । भृशु, भ्रंशु, अधःपतने । वृश, वरणे । कृश, तनू-
करणे । ञितृष, पिपासायाम् । हृष, तुष्टौ । रुष, रिष, हिंसा-
याम् । डिप, क्षेपे । कुप,क्रोधे । गुप,व्याकुलत्वे । युपु, रुपु, लुपु,
विमोहने । लुभ, गार्ध्ये । क्षुभ, संचलने । णभ, तुभ,हिंसायाम् ।
क्लिदू,आर्द्रीभावे। ञिमिदा,स्नेहने। ञिक्ष्विदा,स्नेहनमोचनयोः।
ऋधु,वृद्धौ । गृधु,अभिकांक्षायाम् । वृत्। इत्युदात्ता उदात्तेतः ।

इति श्यन्विकरणा दिवादयः ॥

## अथ स्वादिगणः ॥

—:*:—

### अथ स्वादयो दशोभयतोभाषाः ।

षुञ्, अभिषवे । षिञ्, बन्धने । शिञ्, निशाने । डुमिञ्, प्रक्षेपणे । चिञ्, चयने । स्तृञ्, आच्छादने । कृञ्, हिंसायाम् । वृञ्, वरणे । धुञ्, कंपने । दीर्घान्तोपीत्येके । इति वृञ् वर्जमनुदात्ताः ।

### अथ नव परस्मैभाषाः ।

टुदु, उपतापे । हि, गतौ वृद्धौ च । पृ, प्रीतौ । स्पृ, प्रीति सेवनयोः । प्रीतिचलनयोरित्यन्ये । स्मृ, इत्येके । आपॢ, व्याप्तौ । शकॢ, शक्तौ । राध, साध, संसिद्धौ । इत्यनुदात्ताः ।

### अथ द्वावात्मनेभाषौ ।

अशूङ् व्याप्तौ संघाते च । ष्टिघ, आस्कन्दने । इत्युदात्तावनुदात्तेतौ ।

### अथागणान्ताः षोडश परस्मैभाषाः ।

तिक, तिग, गतौ च । षघ, हिंसायाम् । ञिधृषा, प्रागल्भ्ये । दंभु, दंभने । ऋधु, वृद्धौ । छन्दसि । तृप, प्रीणन इत्येके । अह, व्याप्तौ । दघ, घातने पालने च । चमु, भक्षणे । रि, क्षि, चिरि, जिरि, दाशृ, दृ, हिंसायाम् । इत्युदात्ता उदात्तेतः ।

वृत् । इति श्नुविकरणाः स्वादयः ॥

---

## अथ तुदादिर्गणः ।

—:※:—

### अथ षडुभयतोभाषाः ।

तुद, व्यथने । णुद, प्रेरणे । दिश, अतिसर्जने । भ्रस्ज, पाके
क्षिप, प्रेरणे । कृष, विलेखने । इत्यनुदात्ताः स्वरितेतः ।

### अथैकः परस्मैभाषः ।

ऋषी, गतौ । उदात्त उदात्तेत् ।

### अथ चत्वार आत्मनेभाषाः ।

जुषी, प्रीतिसेवनयोः । ओविजी, भयचलनयोः । ओलजी,
ओलस्जी, व्रीडायाम् । इत्युदात्ता अनुदात्तेतः ।

### अथ व्रश्चादयस्तुर्दशोत्तरशतं परस्मैभाषाः ।

ओव्रश्चू, छेदने । व्यच, व्याजीकरणे । उछि, उछी । उच्छी,
विवासे । ऋच्छ, गतीन्द्रियप्रलयमूर्त्तिभावेषु । मिच्छ, उत्क्लेशे ।
जर्ज, चर्च, झर्झ, परिभाषणभर्त्सनयोः । त्वच, संवरणे । ऋच,
स्तुतौ । उज, आर्जवे । उज्झ, उत्सर्गे । लुभ, विमोहने । रिफ,
कत्थनयुद्धनिन्दाहिंसादानेषु । रिह, इत्येके । तृप, तृंप, तृप्तौ ।
तृफ, तृंफ इत्येके । तुप, तुंप, तुफ, तुंफ, हिंसायाम् । दृफ, दृंफ,
उत्क्लेशे । दृफ, इत्यन्ये । ऋफ, ऋंफ, हिंसायाम् । गुफ, गुंफ, ग्रन्थे ।
उभ, उंभ, पूरणे । शुभ, शुंभ, शोभार्थे । दृभी, ग्रन्थे । चृती, हिंसाग्र-
न्थनयोः । विध, विधाने । जुड, गतौ । जुन, इत्येके । मृड, सुखने ।
पृड, च । पृण, प्रीणने । वृण, च । मृड, हिंसायाम् । तुण, कौटिल्ये ।
पुण, कर्मणि शुभे । मुण, प्रतिज्ञाने । कुण, शब्दोपकरणयोः ।
शुन, गतौ । द्रुण, हिंसागतिकौटिल्येषु । घुण, घूर्ण, भ्रमणे । षुर,
ऐश्वर्यदीप्त्योः । कुर, शब्दे । खुर, छेदने । मुर, संवेष्टने । क्षुर,

विलेखने । घुर, भीमार्थशब्दयोः । पुर, गमने । वृहू, उद्यमने । वृहू, इत्येके । तृहू, स्तृहू, तृंहू, हिंसार्थाः । इषु, इच्छायाम् । मिष, स्पर्द्धायाम् । किल, श्वैत्यक्रीडनयोः । तिल, स्नेहे । चिल, वसने । चल, विलसने । इल, स्वप्नक्षेपणयोः । विल, संवरणे । विल, भेदने । णिल, गहने । हिल, भावकरणे । शिल, षिल, उञ्छे । मिल,श्लेषणे । लिख, अक्षरविन्यासे । कुट, कौटिल्ये । पुट, संश्लेषणे । कुच, संकोचने । गुज, शब्दे । गुड, रक्षायाम् । डिप,क्षेपे । कुर,छेदने । स्फुट,विकसने । मुट, आक्षेपप्रमर्दनयोः । चुट, छेदने । तुट, कलहकर्मणि । चुट, छुट, छेदने । जुड,बन्धने । कड, मदे । लुठ, संश्लेषणे । लुट, इत्येके । कृड, घनत्वे । कुड, बाल्ये । पुड, उत्सर्गे । घुट, प्रतिघाते । तुड, तोडने । थुड,स्थुड, संवरणे । खुड,छुड,इत्येके । स्फुर,स्फुरणे । स्फर, इत्येके । स्फुल, संचलने । स्फुड, चुड, व्रुड, सम्वरणे । क्रुड, भृड, निमज्जने । इत्युदात्ता उदात्तेतः ॥

अथैक आत्मनेभाषः ॥

गुरी,उद्यमने । इत्युदात्तोऽनुदात्तेत् ।

अथ पंच परस्मैभाषाः ॥

णू,स्तवने । धू,विधूनने । गु,पुरीषोत्सर्गे । ध्रु, गतिस्थैर्ययोः । ध्रुव, इत्येके । इत्याद्यावुदात्तावन्त्याश्चानुदात्ताः ।

अथ द्वावात्मने भाषौ।कूङ, शब्दे।कुङ,शब्द इत्येके ।इत्युदात्तौ।

(वृत्) इति कुटादिगणः समाप्तः ॥

अथ द्वावात्मनेभाषौ ॥

पृङ, व्यायामे । मृङ, प्राणत्यागे । इत्यनुदात्तौ ॥

अथ सप्त परस्मैभाषाः ॥

——:*:——

रि, पि, गतौ । धि, धारणे । क्षि, निवासगत्योः । इत्यनुदात्ताः
षू, प्रेरणे । कॄ, विक्षेपे । गॄ, निगरणे । इत्युदात्ताः ॥

अथ द्वावात्मनेभाषौ ॥

दृङ्, आदरे । धृङ्, अनवस्थाने । इत्यनुदात्तौ ॥

अथ षोडश परस्मैभाषाः ॥

प्रच्छ, ज्ञीप्सायाम् । वृत् । किरादयो वृतः ॥

सृज, विसर्गे । टुमस्जो, शुद्धौ । रुजो, भङ्गे । भुजो, कौटिल्ये । छुप, स्पर्शे । रुश, रिश, हिंसायाम् । लिश, गतौ । स्पृश, संस्पर्शने । विच्छ, गतौ । विश, प्रवेशने । मृश, आमर्शने । णुद, प्रेरणे । षद्लृ, विशरणगत्यवसादनेषु । शद्लृ, शातने । इत्यनुदात्ता उदात्तेतो विच्छिस्तूदात्तः ॥

अथ षडुभयतोभाषाः ॥

मिल, संगमे । मुच्लृ, मोचने । लुप्लृ, छेदने । विद्लृ, लाभे । लिप, उपदेहे । षिच, क्षरणे । इत्यनुदात्ताः स्वरितेतो मिलिस्तूदात्तः ॥

अथ त्रयः परस्मैभाषाः ॥

कृती, छेदने । खिद, परिघातने । पिश, अवयवे । इत्युदात्ता उदात्तेतः खिदिस्त्वनुदात्तः । वृत् ।

इति शविकरणास्तुदादयः ॥

## अथ रुधादिगणः ॥

—०—

### अथ नवोभयतोभाषाः ॥

रुधिर्, आवरणे । भिदिर्, विदारणे । छिदिर्, द्वैधीकरणे रिचिर्, विरेचने । विचिर्, पृथग्भावे । क्षुदिर्, संपेषणे । युजिर्, योगे । उच्छृदिर्, दीप्तिदेवनयोः । उतृदिर्, हिंसानादरयोः इत्यनुदात्ताः स्वरितेतः छृदितृदौ तूदात्तौ ।

### अथैकः परस्मैभाषः ।

कृती, छेदने । इत्युदात्त उदात्तेत् ।

### अथैक आत्मनेभाषः ।

ञिइन्धी, दीप्तौ । उदात्तोऽनुदातेत्

### अथ द्वावात्मनेभाषौ ।

खिद, दैन्ये । विद, विचारणे । इत्यनुदात्तावनुदात्तेतौ ।

### अथ द्वादश परस्मैभाषाः ॥

शिष्लृ, विशेषणे । पिष्लृ, संचूर्णने । भंजो, आमर्दने । भुज, पालनाभ्यवहारयोः । तृह, हिंसि, हिंसायाम् । उन्दी, क्लेदने । अञ्जू, व्यक्तिम्रक्षणकान्तिगतिषु । तंचू, संकोचने । ओविजी, भयचलनयोः । वृजी, वर्जने । पृची, संपर्के । इत्युदात्ता उदात्तेतः । आद्याश्चत्वारस्त्वनुदात्ताः । वृत् ।

इति श्नम्विकरणा रुधादयः ॥

---

अथतनादिर्गणः ॥

—:॥:—

अथसप्तोभयतोभाषाः।

तनु, विस्तारे। षणु, दाने। क्षणु, हिंसायाम्। क्षिणु, च। ऋणु, गतौ। तृणु,अदने। घृणु, दीप्तौ। इत्युदात्ताः स्वरितेतः।

अथ द्वावात्मनेभाषौ।

वनु, याचने। मनु, अवबोधने। इत्युदात्तावनुदात्तेतौ।

अथैक उभयतोभाषः।

डुकृञ्, करणे। अनुदात्तः। वृत्

इत्युविकरणास्तनादयः॥

---

अथ क्र्यादिर्गणः।

—:॥:—

अथ सप्तोभयतोभाषाः।

डुक्रीञ्, द्रव्यविनिमये। प्रीञ्, तर्पणे कान्तौ च। श्रीञ्, पाके। मीञ्, हिंसायाम्। षिञ्, बन्धने। स्कुञ्, आप्रवणे। युञ्, बन्धने। इत्यनुदात्ताः।

अथ नवोभयतोभाषाः।

क्नूञ्, शब्दे। द्रूञ्, हिंसायाम्। पूञ्, पवने। मूञ्, बन्धने। लूञ्, छेदने। स्तॄञ्, आच्छादने। कॄञ्,हिंसायाम्। वृञ्, वरणे। धूञ्, कम्पने। इत्युदात्ताः।

अथ आद्यो गृणात्यन्तास्त्रयोदश परस्मैभाषाः ।

शॄ, हिंसायाम् । पॄ, पालनपूरणयोः । वॄ, वरणे । स्तॄ, हिंसायाम् भॄ, भरणे । भॄ, भर्त्सने । जॄ, वयोहानौ । झॄ, इत्येके । दॄ, विदारणे । धॄ, इत्यन्ये । नॄ, नये । मॄ, हिंसायाम् । ऋॄ, गतौ । गॄ, शब्दे । इति आदय उदात्ताः ।

अथ दश परस्मैभाषाः ।

ज्या, वयोहानौ । ब्री, वरणे । री, गतिरेषणयोः । ली, श्लेषणे । व्ली, वरणे । प्ली, गतौ । वृत् । इति प्वादयः ॥

ब्लीष्, हिंसायाम् । भ्री, भये । ज्ञा, अवबोधने । बन्ध, बन्धने । इति ज्यादयोऽनुदात्ताः ।

अथैक आत्मनेभाषः ।

वृङ्, संभक्तौ । इत्युदात्तः । इति ल्वादयः ।

अथ पञ्चविंशतिः परस्मैभाषाः ।

श्रन्थ, विमोचनप्रतिहर्षयोः । मन्थ, विलोडने । श्रन्थ, ग्रन्थ, संदर्भे । कुन्थ, संश्लेषणे । मृद, क्षोदे । मृड, च । मृड, सुखेच । गुध, रोषे । कुष, निष्कर्षे । क्षुभ, सञ्चलने । णभ, तुभ, हिंसायाम् । क्लिशू, विबाधने । अश, भोजने । उध्रस, उञ्छे । इष, आभीक्ष्ण्ये । विष, विप्रयोगे । प्रुष, प्लुष, स्नेहनसेचनपूरणेषु । पुष, पुष्टौ । मुष, स्तेये । खच, भूतप्रादुर्भावे । खव, इत्येके । हिठ, च । इति श्रन्यादय उदात्ता उदात्तेतः ।

अथैक उभयतोभाषः ।

ग्रह, उपादाने । इत्युदात्तः स्वरितेत् । वृत् ।

इति श्नाविकरणाः क्र्यादयः ॥

## अथ चुरादिर्गणः

---*---

### अथ चुरादयस्तुधन्तास्त्रिषष्ट्युत्तरमेकशतमुदात्तेतः

### परस्मैभाषाः ॥

चुर, स्तेये। चिति, स्मृत्याम्। यत्रि, सङ्कोचने। स्फुडि, परिहासे। लक्ष, दर्शनाङ्कनयोः। कुद्रि, अनृतभाषणे। लड, उपसेवायाम्। मिदि, स्नेहने। ओलडि, उत्क्षेपणे। जल, अपवारणे लजेत्येके। पीड, अवगाहने। नट, अवस्यन्दने। श्रथ, प्रयत्ने प्रस्थान इत्येके। बध, संयमने। ऊर्ज्ज, बलप्राणनयोः। पक्ष, परिग्रहे। वर्ण, वर्णने, वर्ण, चूर्ण, प्रेरणे। प्रथ, प्रख्याने। पृथ, प्रक्षेपे। पथ, इत्येके। षम्ब, संबन्धने। शम्ब, च। साम्ब, इत्येके। भक्ष, अदने। कुट्ट, छेदनभर्त्सनयोः। पूरण इत्येके। पुट्ट, चुट्ट, अल्पीभावे। अट्ट, षुट्ट, अनादरे। लुण्ठ, स्तेये। शठ, श्वठ, असंस्कारगत्योः। श्वठि, इत्येके। पिज, कुजि, तुजि, पिजि, लजि, लुजि, हिंसाबलादाननिकेतनेषु। पिस, गतौ। षान्त्व, सामप्रयोगे। श्वल्क, वल्क, परिभाषणे। ष्णिह, स्नेहने। स्फिट, इत्येके। स्मिट, अनादरे। ष्मिङ्, अनादर इत्येके। श्लिष, श्लेषणे। पथि, गतौ। पिच्छ, कुट्टने। छदि, संवरणे। श्रण, दाने। तड, आघाते। खड, खडि, कडि, भेदने। कुडि, रक्षणे। गुडि, वेष्टने च। कुठि, गुठि, चेत्यन्ये। खुडि, खंडने। वटि, विभाजने। वडि, इत्येके। चडि, कोपे। मडि, भूषायाम्। हर्षे च। भडि, कल्याणे। छर्द, वमने। पुस्त, बुस्त, आदरानादरयोः। चुद, संचोदने। नक्क, धक्क, नाशने। चक्क, चुक्क, व्यथने। क्षल, शौचकर्मणि। तल, प्रतिष्ठायाम्। तुल, उन्माने। दुल, उत्क्षेपे। पुल, महत्त्वे। चुल, समुच्छ्राये। मूल, रोहणे। वुल, निमज्जने। कल, विल, क्षेपे। बिल, भेदने। तिल, स्नेहने।

चल, भृतौ। पाल, रक्षणे । तूष, हिंसायाम्। शुल्क, माने। शूर्प, च। चुट, छेदने। मुट, संचूर्णने। पिश, नाशने। पडि, पसि, नाशने । वज, मार्गसंस्कारगत्योः। शुल्क, अतिस्पर्शने। चपि, गत्याम्। क्षपि, क्षान्त्याम्। क्षजि, कृच्छ्रजीवने। श्वर्त्त, गत्याम्। श्वभ्र, च। ज्ञप, मिच्च। क्षप, मारणतोषणनिशामनेषु। यम, च परिवेषणे। चह, परिकल्कने। बल, प्राणने। चिञ्, चयने। रह, त्यागे। घट्ट, चलने। मुस्त, संघाते। खट्ट, संवरणे। खट्ट, स्फिट्ट, चुबि, हिंसायाम्। पूल, सङ्घाते। पूण, इत्येके। पुंस, अभिवर्द्धने। टकि, बन्धने। धूस, कान्तिकरणे। कीट, वरणे। चूर्ण, संकोचने। पूज, पूजायाम्। अर्क, स्तवने। शुठ, आलस्ये। शुठि, शोषणे। जुड, प्रेरणे। गज, मार्ज, शब्दार्थौ। मर्च्च, च। घृ, प्रस्रवणे। पचि, विस्तारवचने। तिज, निशाने। कृत, संशब्दे। वर्द्ध, वर्द्ध, छेदनपूरणयोः। कुबि, आच्छादने। कुभि, इत्येके। लुबि, तुबि, अदर्शने। अर्द्दन इत्यन्ये। ह्लप, व्यक्तायां वाचि। क्लप, इत्येके। चुठि, छेदने। इल, प्रेरणे। म्रच्छ, म्लेच्छने। म्लेच्छ, म्रच्छ, छेदने। म्लेच्छ, अव्यक्तायां वाचि। ब्रूस, बर्ह, हिंसायाम्। गर्द, गर्ज, शब्दे। गर्ध, अभिकांक्षायाम्। गुर्द, पूर्वनिकेतने। जसि, रक्षणे। ईड, स्तुतौ। जसु, हिंसायाम्। पिडि, संघाते। रुष, रोषे। रुड, इत्येके। डिप, क्षेपे। ष्टुप, समुच्छ्राये॥ इत्युदात्ता उदात्तेतः॥

अथ आकुस्मात् द्विचत्वारिंशदात्मनेभाषाः॥

चित, संचेतने। दशि, दंशदर्शनयोः। दसि, दस, इत्येके। डप, डिप, संघाते। तन्त्रि, कुटुम्बधारणे। मन्त्रि, गुप्तपरिभाषणे। स्पश, ग्रहणसंश्लेषणयोः। तर्ज, भर्त्स, तर्ज्जने। बस्त, गन्ध, अर्दने। विष्क, हिंसायाम्। हिष्क, इत्येके। निष्क, परिमाणे। लल, ईप्सायाम्। कूण, संकोचने। तूण, पूरणे। भ्रूण, आशाविशंकयोः। शठ, श्लाघायाम्। यक्ष, पूजायाम्। स्यम, वितर्के।

गूर, उद्यमने। शम, लक्ष, आलोचने। लुट,छेदने। कुठ,इत्येके। कुत्स, अवक्षेपणे। गल, स्रवणे। भल, आभण्डने। कूट, आप्रदाने। अवसादन इत्येके। कुट्ट, प्रतापने। वञ्चु, प्रलंभने। वृष, शक्तिबन्धने। मद, तृप्तियोगे। दिवु, परिकूजने। गृ, विज्ञाने। विद, चेतनाख्याननिवासेषु। मन, स्तम्भे। यु, जुगुप्सायाम्। कुस्म, नाम्नोवा॥ इत्युदात्ता अनुदात्तेतः।

## अथोभयतोभाषाः।

चर्च, अध्ययने। बुक्क,भाषणे। शब्द,उपसर्गादाविष्कारे च। कण, निमीलने। जभि, नाशने। षूद, क्षरणे। जसु, ताडने। पश, बन्धने। अम, रोगे। चट, स्फुट, भेदने। घट, संघाते। हन्त्यर्थाश्च। दिवु, मर्दने। अर्ज, प्रतियत्ने। घुषिर्, विशब्दने। आङः क्रन्द सातत्ये। लस, शिल्पयोगे। तसि, भूष, अलङ्कारे। अर्ह, पूजायाम्। ज्ञा, नियोगे। भज, विश्राणने। शृधु, प्रसहने। यत, निकारोपस्कारयोः। कल, गल, आस्वादने। रघ, इत्येके। रगेत्यन्ये अञ्चु, विशेषणे। लिगि,चित्रीकरणे। मुद,संसर्गे। त्रस, धारणग्रहणवारणेषु। उध्रस, उञ्छे। मुच, प्रमोचनमोदनयोः। वस, स्नेहच्छेदापहरणेषु। चर, संशये। च्यु, हसनसहनयोः। भुवो, अवकल्कने। मिश्रीकरण इत्येके। चिन्तन इत्यन्ये। कृपेश्च।

## आस्वदः सकर्मकात्।

ग्रस,ग्रहणे। पुष,धारणे। दल,विदारणे। पट,पुट,लुट,तुजि, मिजि,पिजि,भजि,लघि, त्रसि,पिसि,कुसि,दसि, कुशि,घट,घटि, बृहि,वर्ह,वल्ह,गुप,धूप, विच्छ,चीव,पुथ, लोकृ, लोचृ, णद,कुप, तर्क,वृतु,वृधु,भाषार्थाः। रुट, लजि अजि,दसि,भृसि, रुषि,शीक, नट, पुटि, जिवि, रघि, लघि,अहि,रहि,महि, च। लडि, तड, नल,च। पूरी, आप्यायने। रुज, हिंसायाम्। ष्वद, आस्वादने॥

आधृषाद्वा

युज, पृच, संयमने । अर्च, पूजायाम् । षह, मर्षणे । ईर, क्षेपे । ली, द्रवीकरणे । वृजी, वर्जने । वृञ्, आवरणे । जॄ, वयोहानौ । ज्रिच, रिच, वियोजनसंपर्चनयोः । शिष, असर्वोपयोगे । तप, दाहे । तृप, तृप्तौ । छृदी, सन्दीपने । चृप, छृप, दृप, सन्दीपने । दृभी, भये । दृभ, सन्दर्भे । छद, संवरणे । श्रथ, मोक्षणे । मी, गतौ । ग्रन्थ, बन्धने । क्राथ, हिंसायाम् । स्वरितेदित्येके । शीक, आमर्षणे । चीक, च । अर्द, हिंसायाम् । अर्ह, पूजायाम् । आङः षद, पद्यर्थे । शुन्ध, शौचकर्मणि । छद, अपवारणे । स्वरितेत् । जुष, परितर्कणे । धूञ्, कंपने । प्रीञ्, तर्पणे । श्रन्थ, ग्रन्थ, सन्दर्भे । आप्लृ, लंभने । तनु, श्रद्धोपकरणयोः । उपसर्गाच्चादैर्घ्ये । वद, सन्देशवचने । स्वरितेत् । वच, परिभाषणे । मान, पूजायाम् । भू, प्राप्तावात्मनेपदी । गर्ह, विनिन्दने । मार्ग, अन्वेषणे । कठि, शोके । मृजू, शौचालंकरणयोः । मृष, तितिक्षायाम् । धृष, प्रसहने । इत्याधृषीयाः ॥

अथादन्ताः ।

कथ, वाक्यप्रबन्धे । वर, ईप्सायाम् । गण, संख्याने । शठ, श्वठ, सम्यगवभाषणे । पट, वट, ग्रन्थे । रह, त्यागे । रङ्ग, गतौ । स्तन, गदी, देवशब्दे । पत, गतौ । पष, अनुपसर्गात् । स्वर, आक्षेपे । रच, प्रतियत्ने । कल, गतौ संख्याने च । चह, परिकल्कने । मह, पूजायाम् । सार, कृप, श्रथ, दौर्बल्ये । स्पृह, ईप्सायाम् । भाम, क्रोधे । सूच, पैशुन्ये । खेट, भक्षणे । खोट, इत्येके । क्षोट, क्षेपे । गोम, उपलेपने । कुमार, क्रीडायाम् । शील, उपधारणे । साम, सान्त्वप्रयोगे । वेल, कालोपदेशे । काल, च । पल्पूल, लवनपवनयोः । वात, सुखसेवनयोः । गवेष, मार्गणे । वास, उपसेवायाम् । निवास, आच्छादने । भाज, पृथक्कर्मणि । समाज, प्रीतिदर्शनयोः ।

ऊन,परिहाने। ध्वन,शब्दे। कूट,परितापे। कूट, परिदाह इत्येके। संकेत,ग्राम,कुण,गुण,चामन्त्रणे। कूण,संकोचने। स्तेन,चौर्य्ये॥

आगर्वीदात्मनेभाषाः।

पद,गतौ। गृह,ग्रहणे। मृग, अन्वेषणे। कुह, विस्मापने। शूर,वीर,विक्रान्तौ स्थूल,परिबृंहणे। अर्थ, उपयाच्ञायाम्। सत्र, सन्तानक्रियायाम्। गर्व, माने। इत्यागर्वीयाः। सूत्र, वेष्टने। विमोचन, इत्यन्ये। मूत्र, प्रस्रवणे। रूक्ष, पारुष्ये। पार, तीर, कर्मसमाप्तौ। पुट,संसर्गे।धेक,दर्शनइत्येके।कत्र,शैथिल्ये।कर्तेत्यप्येके।

प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च॥ तत्करोतितदाचष्टे॥ तेनातिक्रामति॥ धातुरूपं च॥ कत्करणाद्धात्वर्थे॥

वल्कदर्शने। चित्र, चित्रीकरणे। कदाचिद्दर्शने। अंस,समाघाते। वट, विभाजने। वटि,लजि इत्येके। लज,प्रकाशे। मिश्र, सम्पर्के। सङ्ग्राम,युद्धे। अयमनुदात्तेत्। स्तोम,श्लाघायाम्। छिद्र, कर्णभेदने। अन्ध,दृष्ट्युपघाते। उपसंहार इत्यन्ये। दण्ड, दण्डनिपातने। अङ्क, पदे लक्षणे च। अङ्ग,च। सुख,दुःख,तत्क्रियायाम्। रस, आस्वादनस्नेहनयोः। व्यय, वित्तसमुत्सर्गे। रूप, रूपक्रियायाम्। छेद, द्वैधीकरणे। छद, अपवारणे। लाभ, प्रेरणे। व्रण,गात्रविचूर्णने। वर्ण,वर्णक्रियाविस्तारगुणवचनेषु।

बहुलमेतन्निदर्शनम्। णिङङ्गान्निरसने। श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च। पुच्छादिषु धात्वर्थ इत्येव सिद्धम्॥

इति चुरादयः॥

---

## अथ कण्ड्वादयः

—:०:—

कण्डूञ्, गात्रविघर्षणे । मन्तु, अपराधे । वल्गु, पूजामाधुर्ययोः । असु, उपतापे । असू, असूञ् इत्येके । लेट्, लोट्, धौर्त्ये पूर्वभावे स्वप्ने च । लेला, दीप्तौ । इरस् इरज् इरञ् ईर्ष्यायाम् । उषस्, प्रभातभावे । वेद, धौर्त्ये स्वप्ने च । मेधा, आशुग्रहणे । कुषुभ, क्षये । मगध, परिवेष्टने । नीचदास्य इत्यन्ये । तन्तस्, पम्पस्, दुःखे । सुख, दुःख, तत्क्रियायाम् । सपर, पूजायाम् । अरर, आराकर्मणि । भिषज्, चिकित्सायाम् । भिष्णज्, उपसेवायाम् । इषुध, शरधारणे । चरण, वरण, गतौ । चुरण, चौर्य्ये । तुरण, त्वरायाम् । भुरण, धारणपोषणयोः । गद्गद, वाक्स्खलने । एला, केला, खेला, विलासे । वेला, शेला, इले, त्यन्ये । खेला, स्खलने च । अदन्तोयमित्येके । लिट, अल्पकुत्सनयोः । लाट्, जीवने । हृणीङ्, रोषणे लज्जायाञ्च । महीङ्, पूजायाम् । रेखा, श्लाघासादनयोः । दुवस्, परिताप परिचरणयोः । तिरस्, अन्तर्द्धौ । अगद, नीरोगत्वे । उरस्, बलार्थः । तरण, गतौ । पयस्, प्रसृतौ । संभूयस्, प्रभूतभावे । अम्बर, संवर, संभरणे । आकृतिगणोऽयम् ॥

इति धातुपाठे कण्ड्वादिगणः समाप्तः ॥

इति श्रीयुतदयानन्दसरस्वतीस्वामिनाऽकारादिक्रमसूचीपत्रेण सह धातुपाठो रचितः ।

पौषवदि १० गुरुवारे
संवत् १९ ३९

—

# सूचीपत्रम् ॥

| ककारादयः | गणादयः | पृ० | पं० | ककारादयः | गणादयः | पृ० | पं० |
|---|---|---|---|---|---|---|---|
| कु .. | भ्वा० प० अ० | १७ | ४ | कुबि .. | चु० प० से | ३० | १३ |
| कुक .. | भ्वा० आ० से | ४ | ११ | कुभि .. | ,, ,, ,, | ३० | १३ |
| कुङ् .. | ,, ,, अ० | १४ | ५ | कुमार .. | चु० उ० ,, | ३२ | २३ |
| कुङ् .. | तु० ,, ,, | २४ | २० | कुर .. | तु० प० ,, | २३ | २३ |
| कुच .. | भ्वा० प० से | ५ | १० | कुर .. | ,, ,, ,, | २४ | ८ |
| कुच .. | ,, ,, ,, | १२ | २५ | कुर्द .. | भ्वा० आ० ,, | ३ | ११ |
| कुच .. | तु० ,, ,, | २४ | ७ | कुल .. | ,, प० ,, | १२ | १६ |
| कुञ्च .. | भ्वा० ,, ,, | ५ | १० | कुशि .. | चु० उ० ,, | ३१ | २१ |
| कुजु .. | ,, ,, ,, | ५ | १२ | कुष .. | क्र्या० प० ,, | २८ | १५ |
| कुट .. | तु० ,, ,, | २४ | ६ | कुसुभ .. | कं० ,, ,, | ३४ | ५ |
| कुट्ट .. | चु० ,, ,, | २९ | ११ | कुस .. | दि० ,, ,, | २१ | १५ |
| कुट्ट .. | ,, आ० ,, | ३१ | ३ | कुसि .. | चु० उ० ,, | ३१ | २१ |
| कुठ .. | ,, ,, ,, | ३१ | १ | कुस्म .. | ,, आ० ,, | ३१ | ६ |
| कुठि .. | भ्वा० प० ,, | ७ | २ | कुह .. | चु० उ० ,, | ३३ | ४ |
| कुठि .. | चु० ,, ,, | २९ | १८ | कूङ् .. | तु० आ० ,, | २४ | २० |
| कुड .. | तु० ,, ,, | २४ | १० | कूज .. | भ्वा० प० ,, | ५ | १८ |
| कुडि .. | भ्वा० आ० ,, | ६ | ७ | कूट .. | चु० आ० ,, | ३१ | २ |
| कुडि .. | ,, प० ,, | ६ | २१ | कूट .. | ,, उ० ,, | ३३ | १ |
| कुडि .. | चु० ,, ,, | २९ | १८ | कूण .. | चु० आ० ,, | ३० | २५ |
| कुण .. | तु० प० ,, | २३ | २१ | कूण .. | ,, उ० ,, | ३३ | २ |
| कुण .. | चु० उ० ,, | ३३ | २ | कूल .. | भ्वा० प० ,, | ९ | १ |
| कुत्स .. | ,, आ० ,, | ३१ | २ | कृञ् .. | स्वा० उ० अ० | २२ | ४ |
| कुथ .. | दि० प० ,, | १९ | १७ | कृष् .. | त० उ० ,, | २७ | ८ |
| कुन्थ .. | क्र्या० ,, ,, | २८ | १४ | कृड .. | तु० प० से० | २४ | १० |
| कुथि .. | भ्वा० प० ,, | ३ | १८ | कृती .. | ,, ,, ,, | २५ | १८ |
| कुद्रि .. | चु० ,, ,, | २९ | ५ | कृती .. | रु० ,, ,, | २६ | ८ |
| कुप .. | दि० ,, ,, | २१ | १९ | कृप .. | चु० उ० ,, | ३२ | २१ |
| कुप .. | चु० उ० ,, | ३१ | २२ | कृू .. | भ्वा० आ० ,, | ११ | १० |
| कुबि .. | भ्वा० प० ,, | ७ | २३ | कृपेस .. | चु० उ० ,, | ३१ | १८ |

| खकारादयः | गणादयः | पृ० | पं० | गकारादयः | गणादयः | पृ० | पं० |
|---|---|---|---|---|---|---|---|
| खै .. | भ्वा० प० अ० | १३ | २२ | गल .. | चु० आ० से | ३१ | २ |
| खोट .. | चु० उ० से० | ३२ | २२ | गल .. | „ उ० „ | ३१ | १४ |
| खोर्ऋ .. | भ्वा० प० „ | ९ | ७ | गल्ह .. | भ्वा० आ० „ | १० | ५ |
| खोलृ .. | „ „ „ | ९ | ७ | गल्भ .. | „ „ „ | ७ | १५ |
| ख्या .. | अ० „ अ० | १७ | १२ | गवेष .. | चु० उ० „ | ३२ | २५ |
| खुङ् .. | भ्वा० आ० अ० | १४ | ६ | गा .. | जु० प० अ० | १९ | ९ |
| गज .. | „ प० से० | ५ | २४ | गाङ् .. | भ्वा० आ० अ० | १४ | ५ |
| गज .. | चु० प० „ | ३० | ११ | गाधृ .. | „ „ से० | ३ | ५ |
| गजि .. | भ्वा० „ „ | ५ | २४ | गाहू .. | „ „ „ | १० | ८ |
| गड .. | „ „ „ | ११ | १९ | गु .. | तु० प० अ० | २४ | १८ |
| गडि .. | „ „ „ | ४ | ३ | गुङ् .. | भ्वा० आ० „ | १४ | ५ |
| गडि .. | „ „ „ | ७ | ७ | गुङ् .. | „ „ „ | १४ | ६ |
| गण .. | चु० उ० „ | ३२ | १७ | गुज .. | „ प० से० | ५ | १३ |
| गद .. | भ्वा० प० „ | ३ | २० | गुज .. | तु० „ „ | २४ | ७ |
| गद्गद .. | कं० „ „ | २४ | १० | गुजि .. | भ्वा० „ „ | ५ | १३ |
| गदी .. | चु० उ „ | ३२ | १९ | गुठि .. | चु० „ „ | २९ | १८ |
| गन्ध .. | „ आ० „ | ३० | २३ | गुड .. | तु० „ „ | २४ | ७ |
| गम्लृ .. | भ्वा० प० अ० | १४ | २१ | गुडि .. | चु० „ „ | २९ | १८ |
| गर्ज .. | „ „ से० | ५ | १९ | गुण .. | „ उ० „ | ३३ | २ |
| गर्ज .. | चु० „ „ | ३० | १७ | गुद .. | भ्वा० आ० „ | ३ | ११ |
| गर्द .. | भ्वा० „ „ | ४ | १ | गुध .. | दि० प० „ | १९ | १८ |
| गर्द .. | चु० „ „ | ३० | १७ | गुध .. | क्र्या० „ „ | २८ | १५ |
| गर्ध .. | „ „ „ | ३० | १७ | गुप .. | भ्वा० आ० „ | १४ | १५ |
| गर्व .. | भ्वा० „ „ | ७ | २२ | गुप .. | दि० प० „ | २१ | १९ |
| गर्व .. | „ „ „ | ९ | १३ | गुप .. | चु० उ० „ | ३१ | [illegible] |
| गर्व .. | चु० उ० „ | ३२ | ६ | गुपू .. | भ्वा० प० „ | ७ | १८ |
| गर्ह .. | भ्वा० आ० „ | १० | ५ | गुफ .. | तु० „ „ | २३ | १७ |
| गर्ह .. | चु० उ० „ | ३२ | १३ | गुम्फ .. | „ „ „ | २३ | १७ |
| गल .. | भ्वा० प० से० | ९ | ६ | गुरी .. | तु० आ० „ | २४ | १६ |

| झकारादयः | | गणादयः | पृ० | पं० | णकारादयः | | गणादयः | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|
| झर्झ | .. | भ्वा० प० से० | १० | २४ | णभ | .. | दि० प० से० | २१ | २० |
| झर्झ | .. | तु० " " | २३ | १३ | णम | .. | भ्वा० " अ० | १४ | २१ |
| झष | .. | भ्वा० " " | १० | १९ | णय | .. | भ्वा० आ० से० | ८ | १३ |
| झष | .. | " उ० " | १२ | १३ | णय | .. | " " " | ८ | १३ |
| झॄ | .. | क्रया० प० " | २८ | ३ | णल | .. | " " " | १२ | १५ |
| झृष् | .. | दि० " " | १९ | २० | णश | .. | दि० प० " | २१ | ६ |
| टकि | .. | चु० " " | ३० | ९ | णस | .. | भ्वा० आ० " | १० | ३ |
| टल | .. | भ्वा० " " | १२ | १४ | णह | .. | दि० उ० अ० | २० | २० |
| टिकृ | .. | " आ० " | ४ | १३ | णासृ | .. | भ्वा० आ० से० | १० | २ |
| टीकृ | .. | " " " | ४ | १२ | णिक्ष | .. | " प० " | १० | १२ |
| ट्वल | .. | भ्वा० प० " | १२ | १४ | णिजि | .. | अ० आ० " | १६ | १२ |
| डप | .. | चु० आ० " | ३० | २१ | णिजिर् | .. | जु० उ० अ० | १९ | २ |
| डिप | .. | " " " | ३० | २२ | णिदि | .. | भ्वा० प० से० | ४ | ३ |
| डिप | .. | " प० " | ३० | १९ | णिदृ | .. | " उ० " | १३ | ७ |
| डिप | .. | तु० " " | २४ | ८ | णिवि | .. | " प० " | ९ | १४ |
| डिप | .. | दि० " " | २१ | १९ | णिल | .. | तु० " " | २४ | ५ |
| डीङ् | .. | भ्वा० आ० " | १४ | ११ | णिश | .. | भ्वा० " " | १० | २५ |
| डीङ् | .. | दि० " " | २० | ४ | णिसि | : | अ० आ० " | १६ | १२ |
| ढौक | .. | भ्वा० " " | ४ | १२ | णीञ् | .. | भ्वा० उ० अ० | १३ | १८ |
| णक्ष | .. | " प० " | १० | १२ | णीव | .. | भ्वा० प० से० | ९ | १० |
| णख | .. | " " " | ४ | २१ | णील | .. | " " " | ८ | २६ |
| णखि | .. | " " " | ४ | २१ | णु | .. | अ० " से० | १६ | १८ |
| णट | .. | " " " | ६ | १८ | णुद | .. | तु० उ० अ० | २३ | ३ |
| णट | .. | " " " | ११ | २० | णुद | .. | " प० " | २५ | १० |
| णद | : | " " " | ३ | २१ | णू | .. | " " से० | २४ | १९ |
| णद | .. | चु० उ० " | ३१ | २२ | णेदृ | .. | भ्वा० उ० " | १३ | ७ |
| णभ | .. | क्रया० प० से० | २८ | १५ | णेषृ | .. | " अ० " | १० | १ |
| णभ | : | भ्वा० आ० " | ११ | ८ | तक्ष | .. | " प० " | ४ | १७ |
| | | | | | तकि | .. | " " " | ४ | १७ |

| वकारादयः | गणादयः | पृ० | पं० | वकारादयः | गणादयः | पृ० | पं० |
|---|---|---|---|---|---|---|---|
| विष .. | क्र्या० प० से | २८ | १७ | वेथृ .. | भ्वा० आ० से० | ३ | १३ |
| विष्लृ .. | जु० उ० अ० | १९ | २ | वेदृ .. | कं० प० „ | ३४ | ५ |
| विष्क .. | चु० आ० से० | ३० | २४ | वेनृ .. | भ्वा० उ० „ | १३ | ९ |
| विस .. | दि० प० „ | २१ | १५ | वेपृ .. | „ आ० „ | ७ | १० |
| वी .. | अ० „ अ० | १७ | ९ | वेल .. | चु० उ० „ | ३२ | २४ |
| वीर .. | चु० उ० से० | ३३ | ५ | वेल्ल .. | भ्वा० प० „ | ९ | ४ |
| वुजि .. | „ प० „ | २९ | १३ | वेला .. | कं० „ „ | ३४ | ११ |
| वुल .. | „ „ „ | २९ | २४ | वेलृ .. | भ्वा० „ „ | ९ | ४ |
| वृक .. | भ्वा० आ० „ | ४ | ११ | वेवीङ् .. | अ० „ „ | १७ | २४ |
| वृच .. | „ „ „ | ९ | २२ | वेष्ट .. | भ्वा० आ० „ | ६ | ३ |
| वृङ् .. | क्र्या० आ० „ | २८ | ११ | वै .. | „ प० अ० | १३ | २३ |
| वृजी .. | अ० „ „ | १६ | १३ | व्यच .. | तु० „ से० | २३ | ११ |
| वृजी .. | रु० प० „ | २६ | १७ | व्यथ .. | भ्वा० आ० „ | ११ | १३ |
| वृजी .. | चु० उ० „ | ३२ | २ | व्यध .. | दि० प० „ | २१ | २ |
| वृञ् .. | स्वा० „ „ | २२ | ५ | व्यय .. | भ्वा० उ० „ | १३ | ११ |
| वृञ् .. | चु० „ „ | ३२ | २ | व्यय .. | चु० „ „ | ३३ | १८ |
| वृण .. | तु० प० „ | २३ | २० | व्रण .. | चु० „ „ | ३३ | २० |
| वृतु .. | भ्वा० आ० „ | ११ | ९ | व्रश्चू .. | „ प० „ | २३ | ११ |
| वृतु .. | चु० उ० „ | ३१ | १३ | व्री .. | क्र्या० „ अ० | २८ | ६ |
| वृधु .. | भ्वा० आ० „ | ११ | १० | व्रीङ् .. | दि० आ० „ | २० | ५ |
| वृधु .. | चु० उ० „ | ३१ | २३ | व्ली .. | क्र्या० प० „ | २८ | ७ |
| वृश .. | दि० प० „ | २१ | १७ | व्युष .. | दि० „ से० | १९ | १६ |
| वृष .. | चु० आ० „ | ३१ | ३ | व्युष .. | „ „ „ | २१ | १४ |
| वृहि .. | „ उ० „ | ३१ | २२ | व्युस् .. | „ „ „ | २१ | १४ |
| वृह .. | तु० प० „ | २४ | १ | व्रुड .. | तु० „ „ | २४ | १३ |
| वॄ .. | क्र्या० „ „ | २८ | २ | व्रूस .. | चु० „ „ | ३० | १६ |
| वॄञ् .. | „ उ० „ | २७ | १७ | व्येञ् .. | भ्वा० उ० अ० | १५ | १३ |
| वेञ् .. | भ्वा० „ अ० | १५ | १३ | शक .. | दि० प० अ० | २१ | ३ |
| वेणृ .. | „ „ से० | १३ | ९ | शकि .. | भ्वा० आ० से० | ४ | १० |

| षकारादयः | गणादयः | पृ० | पं० | सकारादयः | गणादयः | पृ० | पं० |
|---|---|---|---|---|---|---|---|
| ष्या .. | भ्वा० „ अ० | १२ | २ | षच .. | भ्वा० आ० से० | ५ | ३ |
| स्रा .. | अ० „ „ | १७ | ११ | षच .. | „ उ० „ | १५ | ६ |
| श्लाखृ .. | भ्वा० „ से० | ४ | २० | षञ्ज .. | „ आ० अ० | १४ | २२ |
| श्लाघृ .. | „ आ० „ | ४ | १६ | षट .. | „ प० से० | ६ | १८ |
| श्रिञ् .. | „ उ० „ | १३ | १७ | षणु .. | त० उ० „ | २७ | ३ |
| श्रिषु .. | „ प० „ | १० | २० | सत्र .. | चु० आ० „ | ३३ | ५ |
| श्लिष .. | दि० „ अ० | २१ | ३ | षद .. | „ उ० „ | ३२ | ८ |
| श्लिष .. | चु० „ से० | २८ | १६ | षद्लृ .. | भ्वा० प० अ० | १२ | २४ |
| श्लिषु .. | भ्वा० „ „ | १० | २० | षद्लृ .. | तु० „ „ | २५ | ११ |
| श्वि .. | „ „ „ | १५ | १६ | षन .. | भ्वा० „ से० | ८ | ८ |
| श्विता .. | „ „ „ | ११ | ५ | षप .. | „ „ „ | ७ | १८ |
| श्विदि .. | „ आ० „ | ३ | ७ | सपर .. | कं० „ „ | ३४ | ७ |
| ष्मील .. | „ „ „ | ८ | २५ | सभाज .. | चु० उ० „ | ३२ | २६ |
| स्मीज् .. | क्या० उ० अ० | २७ | १२ | षम .. | भ्वा० प० „ | १२ | १३ |
| ष्च्युतिर् .. | भ्वा० प० से० | ३ | १८ | समी .. | दि० „ „ | २१ | १६ |
| श्रु .. | „ „ अ० | १४ | २ | षम्ब .. | चु० „ „ | २८ | १० |
| ष्वेङ् .. | „ आ० „ | १४ | ८ | सम्भूयस् .. | कं० „ „ | ३४ | १६ |
| श्रै .. | „ प० „ | १३ | २३ | षर्ज .. | भ्वा० „ „ | ५ | १८ |
| श्लोकृ .. | „ आ० से० | ४ | ८ | षर्व .. | „ „ „ | ७ | २२ |
| श्रोणृ .. | „ प० „ | ८ | ७ | षर्व .. | „ „ „ | ८ | १३ |
| श्रोणृ .. | „ „ „ | ८ | ८ | संवर .. | कं „ „ | ३४ | १६ |
| ष्वस्क .. | „ आ० „ | ४ | १३ | षल .. | भ्वा० „ „ | ८ | १६ |
| ष्ठिवु .. | „ प० „ | ८ | ८ | षस .. | „ „ „ | ८ | ६ |
| ष्ठिवु .. | दि० „ „ | १८ | १४ | षस्ज .. | „ „ „ | ५ | १३ |
| षगे .. | भ्वा० „ „ | ११ | २१ | षस .. | „ „ „ | १८ | २ |
| षघ .. | स्वा० „ „ | २२ | १५ | षस्ति .. | „ „ „ | १८ | २ |
| सङ्केत .. | चु० उ० „ | ३३ | २ | षह .. | „ आ० „ | १२ | २१ |
| सङ्ग्राम .. | „ „ „ | ३३ | १५ | षह .. | दि० प० „ | १८ | २० |
| | | | | षह .. | चु० उ० से० | ३२ | २ |

| सकारादयः | गणादयः | पृ० | पं० | सकारादयः | गणादयः | पृ० | पं० |
|---|---|---|---|---|---|---|---|
| स्पदि .. | भ्वा० आ० से० | ३ | ८ | स्फट्ट .. | चु० आ० से० | ३० | ८ |
| स्पश .. | „ उ० „ | १३ | १२ | स्मिङ् .. | भ्वा० „ अ० | १४ | ५ |
| स्फर .. | तु० प० „ | २४ | १२ | स्मिङ् .. | चु० प० „ | २८ | १६ |
| स्यन्दू .. | भ्वा० आ० „ | ११ | १० | स्मिट .. | „ „ से० | २८ | १५ |
| स्यम .. | चु० „ „ | ३० | २६ | स्रिवु .. | दि० „ „ | १८ | १४ |
| स्यमु .. | भ्वा० प० „ | १२ | १३ | ष्विदा .. | भ्वा० आ० „ | ११ | ५ |
| स्रकि .. | „ आ० „ | ४ | ८ | ष्विदा .. | „ प० „ | १४ | २० |
| स्रम्भु .. | „ „ „ | ७ | १४ | ष्विदा .. | दि० „ „ | २१ | ४ |
| स्कम्भु .. | „ „ „ | ११ | ८ | ष्टीम .. | „ „ „ | १८ | १८ |
| स्रंसु .. | „ „ „ | ११ | ८ | स्मील .. | भ्वा० „ „ | ८ | २५ |
| स्वञ्ज .. | „ „ अ० | १४ | १७ | स्कुञ् .. | क्रया० उ० अ० | २७ | १३ |
| ष्वद .. | भ्वा० „ से० | ३ | १० | स्कुदि .. | भ्वा० आ० से० | ३ | ७ |
| स्वद .. | चु० उ० „ | ३१ | २५ | ष्टुच .. | „ „ „ | ५ | ६ |
| स्वन .. | भ्वा० प० „ | १२ | ४ | ष्टुञ् .. | अ० उ० अ० | १७ | ७ |
| स्वन .. | „ „ „ | १२ | १३ | ष्टुप .. | चु० प० से० | ३० | १८ |
| स्वप .. | अ० „ अ० | १७ | १८ | ष्टुभु .. | भ्वा० आ० „ | ७ | १६ |
| स्वर .. | चु० उ० से० | ३२ | १८ | ष्णु .. | अ० प० अ० | १७ | ४ |
| स्वर्द .. | भ्वा० आ० „ | ३ | १० | ष्णुसु .. | दि० „ से० | १८ | १५ |
| ष्ठा .. | „ प० अ० | १३ | २५ | ष्णुह .. | „ „ „ | २१ | ७ |
| ष्णा .. | अ० „ „ | १७ | ११ | स्फुट .. | भ्वा० आ० „ | ६ | ४ |
| स्ना .. | भ्वा० „ „ | १२ | ६ | स्फुट .. | तु० प० „ | २४ | ८ |
| स्फायी .. | „ आ० से० | ८ | १६ | स्फुट .. | चु० उ० „ | ३१ | १० |
| स्वाद .. | „ „ „ | ३ | १२ | स्फुटिर् .. | भ्वा० प० „ | ६ | २३ |
| ष्टिघ .. | स्वा० „ „ | २२ | १२ | स्फुड .. | तु० „ „ | २४ | १३ |
| ष्टिपृ .. | स्वा० „ „ | ७ | ८ | स्फुडि .. | चु० „ „ | २८ | ४ |
| ष्टिम .. | दि० प० „ | १८ | १८ | स्फुर .. | तु० „ „ | २४ | १२ |
| ष्णिह .. | „ „ „ | २१ | ७ | स्फुर्छा .. | भ्वा० „ „ | ५ | १६ |
| ष्णिह .. | चु० „ „ | २८ | १५ | स्फुल .. | तु० „ „ | २४ | १२ |
| स्फिट .. | „ „ „ | २८ | १५ | स्नु .. | भ्वा० „ अ० | १४ | २ |

| हकारादयः | | गणादयः | पृ० | पं० | हकारादयः | | गणादयः | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|
| हृषु | .. | भ्वा० प० से० | १० | २२ | ह्लगे | .. | भ्वा० प० से० | ११ | २१ |
| हेठ | .. | „ आ० „ | ६ | ६ | ह्लस | .. | „ „ „ | १० | २३ |
| हेड | .. | „ प० „ | ११ | १९ | ह्वल | .. | „ „ „ | १२ | १ |
| हेडृ | .. | „ आ० „ | ६ | १० | ह्वल | .. | „ „ „ | १२ | ६ |
| हेपृ | .. | „ „ „ | ७ | ११ | ह्राद | .. | „ आ० „ | ३ | १२ |
| हेषृ | .. | „ „ „ | १० | १ | ह्लादी | .. | „ „ „ | ३ | १२ |
| होडृ | .. | „ प० „ | ७ | ५ | ह्री | .. | जु० प० अ० | १८ | ९ |
| ह्मल | .. | „ „ „ | १२ | १ | ह्रीच्छ | .. | भ्वा० „ से | ५ | १५ |
| ह्मल | .. | „ „ „ | १२ | ६ | ह्रुङ् | .. | अ० आ० अ० | १८ | ५ |
| ह्लप | .. | चु० „ „ | २० | १४ | ह्वृ | .. | भ्वा० प० से० | १३ | २६ |
| ह्रगे | .. | भ्वा० „ „ | ११ | २१ | ह्रेषृ | .. | „ आ० „ | १० | १ |
| ह्रस | .. | „ „ „ | १० | २२ | ह्वेञ् | .. | „ उ० „ | १५ | १३ |

---

इति

# शुद्धिपत्रम् ॥

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १३ | अनिठ् | अनिट् |
| ५ | ५ | धारणे | धारणो |
| ५ | १० | कुच | कुञ्च |
| ५ | २२ | भर्ज्ज्ने | भर्ज्जने |
| ६ | १२ | द्वाशीतिः | द्व्यशीतिः |
| ८ | ६ | वण | वण |
| ८ | २२ | ० | मव्यबन्धर्मे |
| ८ | २३ | यर्याप्ति | पर्याप्ति |
| १० | १२ | ष्टच्च | ष्टृच्च |
| ११ | २४ | वनच | चनच |
| १६ | ८ | दात्तितो | दात्तो |
| १८ | ९ | हृ | ह्री |
| १८ | १६ | ० | अनुदात्तौ |
| १९ | ७ | भर्त्स्सन | भर्त्सन |
| २० | ६ | पीङ् | पीङ् |
| २१ | १३ | ० | व्युषविभागे |
| २१ | १४ | व्युषविभागे | ० |
| २२ | १८ | द | दृ |
| २३ | २० | मृड | मृण |
| २४ | १० | श्लेणे | श्लेषणे |
| २८ | १८ | ह्रिठ | हेठ |
| ३० | १ | तूष | लूष |
| ३१ | २५ | आख्वा | आस्वा |
| ३२ | ३ | त्तये | क्षेपे |
| ३२ | २६ | समाज | सभाज |
| ३५ | ६ | ४ २१ | ४ २२ |
| ३७ | ३५ | २४ १३ | २३ १३ |
| ३७ | ४५ | ८ २४ | २८ ४ |
| ४० | ३९ | ० | समूष् दि० प० से० |
| ४२ | ३६ | भल्भ | गल्भ |
| ४३ | १८ | ९ २९ | ९ २६ |
| ४४ | २३ | „ „ „ | „ ७० „ |
| ४६ | २६ | ४ २३ | ४ २४ |
| ४६ | २७ | जुङ् | जुड |
| ४६ | २७ | जृ | झॄ |
| ४७ | ११ | टूल | टूल |
| ४९ | २२ | तूषत्तु० „ „ २१–१ | ० |
| ५४ | २५ | पूड | पूङ् |

इति

# वेदाङ्गप्रकाशः ॥

—※—

ये पुस्तकें "वैदिकयंत्रालय" प्रयाग में रोक दाम भेजने से मिल सकते हैं :—

| | | |
|---|---|---|
| १ | वर्णोच्चारणशिक्षा .. .. .. .. | =) |
| २ | संधिविषय .. .. .. .. | ।) |
| ३ | नामिक .. .. .. .. | ॥ |
| ४ | कारकीय .. .. .. .. | ।=) |
| ५ | सामासिक .. .. .. .. | ॥) |
| ६ | स्त्रैणताद्धित .. .. .. .. | |
| ७ | अव्ययार्थ .. .. .. .. | |
| ८ | आख्यातिक .. .. .. .. | |
| ९ | सौवर .. .. .. .. | |
| १० | पारिभाषिक .. .. .. .. | |
| ११ | धातुपाठ .. .. .. .. | |
| १२ | गणपाठ .. .. .. .. | ।≡ |
| १३ | उणादिकोष .. .. .. .. | ॥।) |
| १४ | निघंटु .. .. .. .. | |
| | योग .. .. .. .. | ८।- |

# ॥ अथ वेदाङ्गप्रकाशः ॥

तत्रत्यः ।

चतुर्दशो भागः ॥

## गणपाठः ।

पाणिनिमुनिप्रणीतायामष्टाध्याय्याम्

एकादशो भागः ।

श्रीमत्स्वामिदयानन्दसरस्वतीकृतव्याख्यासहितः ।
पण्डितज्वालादत्तशर्म्मणा संशोधितः ।

पठनपाठनव्यवस्थायां चतुर्दशं पुस्तकम् ।

मुन्शी समर्थदान के प्रबन्धसे
वैदिक यन्त्रालय प्रयाग में मुद्रित हुआ



संवत् १९४० श्रावण कृष्ण १४

पहिली बार १००० पुस्तक छपे

मूल्य ।≶)

# अथ गणानां सूचीपत्रम् ॥

---o---

# भूमिका ।

——0——

इस पुस्तक का नाम गणपाठ इस लिये है कि एकत्र मिला के बहुत २ शब्दों का समुदाय पठित हैं । यह पुस्तक पाणिनि मुनि जी का बनाया है इस के कार्य्यकार अष्टाध्यायी के सूत्र हैं यद्यपि काशिकादि पुस्तकों में तत्तत् सूत्र पर गणपाठ भी छप गया है तथापि बीच २ सूत्रों के दूर २ होने से गण भी दूर २ हैं इस से कण्ठस्थ करना विचारना वा अनुवृत्तिकरना कठिन होता था इस लिये उस २ गणकार्य विधायक सूत्र को सार्थक लिखकर एक दो उदाहरण देके जहां २ एक ऐसा (:--)चिन्ह बना के लिखा है वहां २ से गण पाठ का आरम्भ समझना चाहिये और जिस २ शब्द की विशेष व्याख्या अपेक्षित थी उस २ पर एक आदि अङ्क लिख और रेखा देकर नीचे विवरण ( जिस को नोट कहते हैं ) लिखा है । उस को भी यथायोग्य समझ लेना चाहिये इन के अर्थ अष्टाध्यायी निरुक्त निघंटु और उणादिकोष तथा प्रकृति प्रत्ययादि की ऊहा से समझ लेना योग्य हैं । यद्यपि भ्वादि और उणादि भी एक २ सूत्र पर गण हैं तो भी उन के बड़े और विलक्षण (१) होने से पृथक् श्रीपाणिनि मुनि जी ने लिखे हैं और सूत्र के समान वार्त्तिक गण हैं उन को भी वार्त्तिक के आगे लिख दिया है जो साधारणता से व्याकरण के बोध युक्त हैं वे भी इन का रूप और अर्थ पढ़ पढ़ा सकते हैं ॥

अलमतिविस्तरेण विपश्चिद्वरशिरोमणिषु ॥

स्थान महाराणा जी का उदयपुर
मिति माघ शुक्ला १० सं० १९३९

दयानन्द सरस्वती

---

(१) भ्वादि धातु अनुबंधसहित और उणादि में प्रकृतिप्रत्ययसाधुत्व पूर्वक लेख है और सर्वादि में सिद्ध शब्दों का पाठ अनुक्रम से है इसी लिये उन दोनों गणों से यह और इस से वे पृथक् २ रक्खे हैं ।

ओम्

# अथ गणपाठः ।

---

## १—सर्वादीनि सर्वनामानि ॥ अ० ॥ १ । १ । २७ ॥

सर्वादीनि प्रातिपदिकानि सर्वनामसंज्ञानि भवन्ति । सर्वे । सर्वस्मै । सर्वेषां नामानि सर्वनामानीति समासेनान्वर्थसंज्ञा विज्ञानात् सर्वो नाम कश्चिन् मनुष्यविशेषस्तस्मै सर्वाय देहीति सर्वनामसंज्ञा न भवति । अत एव विशेषणवाचकानि सर्वादीनि प्रादिपदिकानि विज्ञेयानि :–

सर्व । विश्व । उभ । उभय । डतर । डतम । इतर । अन्य । अन्यतर । त्व । त्वत् । नेम । सम (१) सिम (२) पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ स्वमज्ञातिधनाख्यायाम् ॥ अन्तरम्बहिर्योगोपसंव्यानयोः ॥ त्यद् । तद् । यद् । एतद् । इदम् । अदस् । एक । द्वि । युष्मद् । अस्मद् । भवतु । किम् । इति सर्वादिर्गणः ॥

## २—स्वरादिनिपातमव्ययम् ॥ अ० ॥ १ । १ । ३७ ॥

स्वरादयश्च निपाताश्चैषां समाहारः । स्वरादिनिपातमव्ययसंज्ञं भवति । निपाताश्चादयो वक्ष्यन्ते :–

स्वर् । अन्तर् । प्रातर् । एते अन्तोदात्ताः । पुनर् । आद्युदात्तः । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । आरात् । ऋते । युगपत् । पृथक् । अन्तोदात्ताः । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । आविस् । अवस् । अधस् । समया । निकषा । स्वयम् । मृषा । नक्तम् । नञ् । हेतौ । अद्धा । इद्धा । सामि । ह्यस्प्रभृतयोऽप्यन्तोदात्ताः । वत् (३) सन् ।

---

(१) सूत्रान्तरे समानामिति निर्देशात्सर्वपर्यायस्यैव समशब्दस्य सर्वनामसंज्ञेष्यते तेन तुल्यवाचकस्य न भवति ॥

(२) इमानि त्रीणि सूत्राण्यष्टाध्याय्यामपि पठ्यन्ते । तत्र जसि विभाषा सर्वनामसंज्ञा । अत्र तु सामान्येन ॥

(३) वदिति तदन्तस्य वतिप्रत्ययान्तस्य ग्रहणम् । ब्राह्मणवत् । क्षत्रियवत् । स्थानिवत् । इत्यादि ॥

सनात् । सनत् । तिरस् । एत आद्युदात्ताः । अन्तरा । अयमन्तोदात्तः । अन्तरेण । ज्योक् । कम् । शम् । सना । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मुधा । मिथ्या । (१) क्त्वातोसुन्कसुनः । कृन्मकारान्तः सन्ध्यक्षरान्तोऽव्ययीभावश्च ॥ पुरा । मिथो । मिथस् । प्रबाहुकम् । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्द्धम् । समम् । नमस् । हिरुक् । (२) तसिलादयः प्राक्पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । मान्तः । कृत्वोर्थाः । तसिः । आम्थालौ । प्रतान् । प्रशान् । इति स्वरादिगणः ॥

## ३—चादयोऽसत्त्वे ॥ अ० ॥ १ । ४ । ५७ ॥

अद्रव्यवाचकाश्चादयो निपातसंज्ञा भवन्ति । असत्त्व इति किम् । पशुर्वै पुरुषः । अत्र पशुशब्दस्य द्रव्यवाचकत्वादव्ययसंज्ञा न भवति :—

च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । सूपत् । कूपत् । कुवित् । नेत् । चेत् । चण् । कच्चित् । यत्र । नह । हन्त । माकिम् । नकिम् । माङ् । नञ् । यावत् । तावत् । त्वा । त्वै । द्वै । रै । श्रौषट् । वौषट् । स्वाहा । वषट् । स्वधा । ओम् । किल । तथा । अथ । सु । स्म । अस्मि । अ । इ । उ । ऋ । लृ । ए । ऐ । ओ । औ । अम् । तक । उञ् । उकञ् । वेलायाम् । मात्रायाम् । यथा । यत् । यम् । तत् । किम् । पुरा । अद्धा । धिक् । हाहा । हे । है । प्याट् । पाट् । थाट् । अहो । उताहो । हो । तुम् । तथाहि । खलु । आम् । आहो । अथो । ननु । मन्ये । मिथ्या । असि । ब्रूहि । तु । नु । इति । इव । वत् । चन । वत । इह । शाम् । शम् । कम् । अनुकम् । नहिकम् । हिकम् । सुकम् । सत्यम् । ऋतम् । वाकिर् । नकिर् । आङ् । अ । मा । नो । ना । वाकिरादयः । प्रतिषेधे । उत । दह । अद्धा । इडा । मुधा । नोचेत् । नचेत् । नहि । जातु । कथम् । कुतः । कुत्र । अव । अनु । हाहो । हैहा । ईहा । आहोस्वित् । छम्वट् । खम् । दिष्ट्या । पशु । वट् । सह । आनुषक् । अङ्ग । फट् । ताजक् । अये । अरे । चटु । वाट् । कुम् । खुम् । घुम् । हुम् । आईम् । शीम् । सम् । वै । त्वे । तुवै । न्वै । नुवै । अध । अथम् । स्मि । अच्छ । अदल् । दह । हेहे । हैहै । नौ । म ।

(१) क्त्वादीनामष्टाध्याय्यां सूत्रपाठे ग्रहणमस्ति । तेषामेवात्र स्वरादिषु परिगणनं कृतम् । न कश्चिद्विशेषः ॥

(२) तद्धितश्चाऽसर्वविभक्तिरिति सूत्रेण येषामव्ययसंज्ञा तेषामेव तद्धितप्रत्ययानामत्र विस्पष्टार्थं परिगणनम् ॥

आम् । अस् । शुकम् । शम् । वव । वात् । हिकम् । हिनुक । वशम् । शिकम् । खकम् । सनुकम् । नुकम् । अन्त । यो । सुक् । भाजक् । अले । वट् । वाट् । किम् । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः (१) इति चादिगणः ॥

## ४—प्रादयः ॥ अ० ॥ १ । ४ । ५८ ॥

असत्त्ववाचकाः प्रादयो निपातसंज्ञा भवति । पराजयति । पराजयते इत्यादि । असत्त्व इति किम् । परा जयति सेना । अत्रोपसर्गसंज्ञयात्मनेपदं माभूत् :—
प्र । परा । अप । सम् । अनु । अव । निस् । निर् । दुस् । दुर् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप । इति प्रादयः ॥

## ५—ऊर्यादिच्विडाचश्च ॥ अ० ॥ १ । ४ । ६१ ॥

ऊर्यादयः शब्दाश्च्व्यन्ताडाजन्ताश्च क्रियायोगे गतिसंज्ञा भवन्ति । च्वि । शुक्लीकृत्य । शुक्लीकृतम् । डाच् । पटपटाकृत्य । पटपटाकृतम् । ऊरीकृत्य । शुक्लीकरोति । पटपटाकरोति ऊरीकरोति । इत्यादि :—
ऊरी उररी । पापी । ताली । आताली । वेताली । धूसी । शकला । संशकला । ध्वंसकला । भ्रंशकला ॥शकलादयो हिंसायाम्॥ गुलुगुधा पीडार्थे ॥ सजूः सहार्थे ॥ फलू, फली, विक्ली, आक्ली । इति विकारे ॥ आलोष्टी । कराली । केवाली । शेवाली । वर्षाली । मस्मसा । मसमसा । एते हिंसायाम् । वषट् । वौषट् । श्रौषट् । स्वाहा । स्वधा । बन्धा । प्रादुस् । श्रत् । आवित् । इत्यूर्यादयः ॥

## ६—साक्षात्प्रभृतीनि च ॥ अ० ॥ १ । ४ । ७४ ॥

साक्षादादीनि प्रातिपदिकानि कृञ्योगे विभाषा गतिसंज्ञानि भवन्ति । असाक्षात् साक्षात्कृत्वा । साक्षात्कृत्य । साक्षात्कृत्वा । इत्यादि :—
साक्षात् । मिथ्या । चिन्ता । भद्रा । लोचना । विभाषा । सम्पत्का । आस्था । अमा । श्रद्धा । प्राजर्या । प्राजरुहा । वीजर्या । वीजरुहा । संसर्या । अर्थे । लवणम् । उष्णम् । शीतम् । उदकम् । आर्द्रम् (२) अग्नौ । वशे । विकम्पने । विहसने । प्रहसने । प्रतपने । प्रादुस् । नमस् । आविस् । इति साक्षात्प्रभृतयः ॥

---

(१) उपसर्गप्रतिरूपकाः । अवदत्तम् । विदत्तम् । प्रदत्तम् । अत्राच उपसर्गादिति तत्वं न भवति । विभक्ति प्रतिरूपकाः । चिरेण । चिरात् । चिराय । इत्यादयः । स्वरप्रतिरूपकाः:— अ । इ । उ । ऋ । ए । ओ । इत्येवमादयः ॥

(२) लवणादय आर्द्रपर्यन्ताः शब्दा गतिसंज्ञासन्नियोगेन मकारान्ता निपात्यन्ते नतु सर्वत्र ॥

## ७—तिष्ठद्गुप्रभृतीनि च ॥ अ० ॥ २ । १ । १७ ॥

तिष्ठद्ग्वादयः समुदायाः कृतसमासा अव्ययीभावसंज्ञका विभाषया निपात्यन्ते। तिष्ठन्ति गावो यस्मिन् काले दोहनाय स तिष्ठद्गु कालविशेषः। खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण नैव संबध्यन्ते। अन्यपदार्थे च काले वर्त्तन्ते।

तिष्ठद्गु। वहद्गु। आयतीगवम्। खलेयवम्। खलेबुसम्। लूनयवम्। लूयमानयवम्। पूतयवम्। पूयमानयवम्। संहृतयवम्। संह्रियमाणयवम्। संहृतबुसम्। संह्रियमाणबुसम्। एते कालशब्दाः। समभूमि। समपदाति। सुषमम्। विषमम्। निष्षमम्। दुष्षमम्। अपरसमम्। आयतीसमम्। प्राह्णम्। प्ररथम्। प्रमृगम्। प्रदक्षिणम्। अपरदक्षिणम्। सम्प्रति। असम्प्रति। पापसमम्। पुण्यसमम्। इच्कर्मव्यतिहारे (१) इति तिष्ठद्गुप्रभृतयः॥

## ८—सप्तमी शौण्डैः॥ अ० ॥ २ । १ । ४० ॥

शौण्डैरिति बहुवचनादेव गणनिर्देशः। सप्तम्यन्तंसुबन्तं शौण्डादिभिः सह विभाषा समस्यते सप्तमी तत्पुरुषश्च स समासो भवति। अक्षेषु धूर्त्तोऽक्षधूर्त्तः। अक्षकितवः। इत्यादि :-

शौण्ड। धूर्त्त। कितव। व्याड। प्रवीण। संवीत। अन्तर। अधिपटु। पण्डित। कुशल। चपल। निपुण। संव्याड। मन्य। समीर। इति शौण्डादयः॥

## ९—पात्रेसंमितादयश्च॥ अ०॥ २ । १ । ४८ ॥

पात्रे संमितादयः समुदायाः क्षेपे गम्यमाने सप्तमीतत्पुरुषसंज्ञा निपात्यन्तेः— (२) पात्रेसम्मिताः। पात्रेबहुलाः। उदरक्रिमिः। कूपकच्छपः। कूपचूर्णकः। अवटकच्छपः। कूपमण्डूकः। कुम्भमण्डूकः। उदपानमण्डूकः। नगरकाकः। नगरवायसः। मातरिपुरुषः। पिण्डीशूरः। गेहेशूरः। गेहेनर्दी। गेहेक्ष्वेडी। गेहेविजिती। गेहेव्याडः। गेहेतृप्तः। गेहेधृष्टः। गर्भेतृप्तः। आखनिकबकः। गोष्ठेशूरः। गोष्ठेविजिता। गोष्ठेक्ष्वेडी। गेहेमेही। गोष्ठेपटुः। गोष्ठेपण्डितः। गोष्ठेप्रगल्भः। कर्णेटिट्टिभः। कर्णेचुरचुरा। आकृतिगणोयम्॥

---

(१) कर्मव्यतिहारेऽर्थे समासान्तो इच्प्रत्ययान्ता अपि शब्दा अव्ययीभावसंज्ञा भवन्ति। दण्डादण्डि। मुसलामुसलि। नखानखि। केशाकेशि। इत्यादि॥

(२) येऽत्र गणे क्तान्तास्तत्र क्षेप इति पूर्वसूत्रेणैव सिद्धे पुनः पाठो युक्तारोह्याद्यन्तर्गत पात्रेसम्मितादीनां पूर्वपदाद्युदात्तार्थः॥

## १०—उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥अ०॥ २।१।५६॥

सामान्यधर्मस्याप्रयोगे सत्युपमेयवाची सुबन्तमुपमानवचनैर्व्याघ्रादिभिः सह विभाषा समस्यते, स समानाधिकरणतत्पुरुषः समासो भवति व्याघ्र इव पुरुषः पुरुषव्याघ्रः। पुरुषसिंहः। इत्यादि। सामान्याप्रयोग इति किम्। पुरुषो व्याघ्र इव शूरः। उपमानोपमेयप्रधानो धर्मः शूरत्वमत्र प्रयुज्यतेऽतः समासनिषेधः :—

व्याघ्र। सिंह। ऋच। ऋषभ। चन्दन। वृच। वृष। वराह। हस्तिन्। कुञ्जर। रुरु। पृषत्। पुण्डरीक। बलाहक (१) आकृतिगणोऽयम्। इति व्याघ्रादयः॥

## ११—श्रेण्यादयः कृतादिभिः ॥ अ० ॥ २ । १ । ५९ ॥

श्रेण्यादयः सुबन्ताः कृतादिभिः समानाधिकरणैः सह विभाषा समस्यन्ते। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः (२) एकक्रतावसन्ति वणिजः। इत्यादि :—

श्रेणि। एक। पूग। कुण्ड। राशि। विशिख। निचय। निधान। इन्द्र। देव। मुण्ड। भूत। श्रवण। वदान्य। अध्यापक। ब्राह्मण। क्षत्रिय। पटु। पण्डित। कुशल। चपल। निपुण। कृपण। इतिश्रेण्यादयः। कृत। मित। मत। भूत। उक्त। समाम्नात। समाम्नात। समाख्यात। सम्भावित। अवधारित। निराकृत। अवकल्पित। उपकृत। उपाकृत। आकृतिगणोऽयम्। इति कृतादयः॥

## १२—वा०-कृतापकृतादीनामुपसंख्यानम् (३) ॥ २ । १ । ६० ॥

कृतापकृतम्। भुक्तविभुक्तम्। पीतविपीतम्। गतप्रत्यागतम्। यातानुयातम्। क्रयाक्रयिका। पुटापुटिका। फलाफलिका। मानोन्मानिका। इतिकृतापकृतादयः।

---

(१) अत्राकृतिगणेनेदमपि सिद्धं भवति। मुखं पद्ममिव, मुखपद्मम्। मुखकमलम्। करकिसलयम्। पार्थिवचन्द्रः॥

(२) अत्र श्रेण्यादिषु च्व्यर्थवचनमिति वार्त्तिकेन च्व्यर्थलाभः। यदा च च्व्यन्ताः श्रेण्यादयस्तदा च्विप्रत्ययान्तानां गतिसंज्ञत्वात् कुगतिप्रादय इति नित्यसमासः श्रेणीकृताः। इत्यादि॥

(३) अनञ्विशिष्टक्तान्तेनापि समासो यथा स्यादिति वार्त्तिकम्। कृतंचापकृतं च कृतापकृतं। वार्त्तिकोपरि तत्सूत्रसंख्या सर्वत्र धरिष्यते। यस्योपरि महाभाष्ये वार्त्तिकमस्ति॥

१३—वा०—समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च (१) २ । १ । ६९ ॥

शाकभोजी पार्थिवः शाकपार्थिवः । कुतपसौश्रुतः । अजातौल्वलिः । यष्टिमौद्गल्यः । इत्यादि ॥

१४—मयूरव्यंसकादयश्च ॥ अ० ॥ २ । १ । ७२ ॥

मयूरव्यंसकाः समुदायाः कृतसमासाः समानाधिकरणतत्पुरुषसंज्ञका निपात्यन्ते। चकारो निश्चयार्थः । परममयूरव्यंसकइतिसमासान्तरं न भवति :—

मयूरव्यंसकः । छात्रव्यंसकः (२) । काम्बोजमुण्डः । यवनमुण्डः । (३) छन्दसि । हस्तेगृह्य । पादेगृह्य । लाङ्गूलेगृह्य । पुनर्दाय ॥ (४) एहीडादयोऽन्यपदार्थे ॥ एहीडम् । एहियवं वर्त्तते । एहिवाणिजाक्रिया। अपेहिवाणिजा ।प्रेहिवाणिजा। एहिस्वागता ।अपेहिस्वागता।प्रेहिस्वागता। एहिद्वितीया। अपेहिद्वितीया। प्रोहकटा। अपोहकटा । प्रोहकर्दमा । अपोहकर्दमा । उद्धरचूडा। आहरचेला । आहरवसना। आहरवनिता। कृन्तविचक्षणा । उद्धरोत्सृजा । उद्धमविधमा । उत्पचविपचा। उत्पतनिपता । उच्चावचम् । उच्चनीचम् । अपचितोपचितम् । अवचितपराचितम्। निश्चप्रचम् । अकिंचनम् । स्नात्वाकालकः । पीत्वास्थिरकः । भुक्त्वा सुहितः । प्रोष्य पापीयान् । उत्पत्यव्याकुला । निपत्यरोहिणी । निषण्णश्यामा । अपेहिप्रघसा । इहपञ्चमी । इहद्वितीया । जहिकर्मणा।बहुलमाभीक्ष्ण्ये कर्त्तारंचाभिदधाति (५)।

---

(१) शाकपार्थिवादिषु समानाधिकरणतत्पुरुषः समासो यथा स्यात् । पूर्वसमासे यदुत्तरपदं तस्य च लोपः । यथा दृष्टं विज्ञेयम् ॥

(२) मयूर इव व्यंसको धूर्त्तो मयूरव्यंसकः । छात्र इव व्यंसकः ।कम्बोज इव मुण्डः । इत्युपमानसमासापवादोऽयं समासः ॥

(३) अतोऽग्रे चत्वारः शब्दाश्छन्दसि वेदविषये निपात्यन्ते ॥

(४) त्वं यस्येडामन्नंस्तुतिं वा—एहि प्राप्नुहि तत्, एहीडम् । एवमेहियवादिषु यथाप्रयोगमर्थानुकूलः समासोज्ञेयः ॥

(५) जहिक्रियाऽऽभीक्ष्ण्येऽर्थे स्वेनैव कर्मणा सह बहुलंसमस्यते समाससमुदायश्च कर्तृवाचको भवति । त्वंजोड़ंजहि, इति जहिजोड़स्त्वम् । उज्जहिजोडः । जहिस्तम्बः । इत्यादि । आख्यातः क्रियाशब्द आख्यातेनैव सहसमस्यते । अश्नीत च पिबति च, इति समासेकृते प्रातिपदिकसंज्ञायक्रियाविशेषणे टाप् । अश्नीत पिबता । इत्यादि ॥

जहिजोडः । उज्जहिजोडः । जहिस्तम्बः । उज्जहिस्तम्बः । ( आख्यातमाख्यातेन क्रियासातत्ये ) ॥ अश्नीतपिबता । पचतभृज्जता । खादतमोदता । खादताचमता आहरनिवपा । आवपनिष्किरा । उत्पचविपचा । भिन्द्धिलवणा । छिन्द्धिविचक्षणा । पचलवणा । पचप्रकूटा । ( १ ) इतिमयूरव्यंसकादयः ॥

## १५—याजकादिभिश्च ॥ अ० ॥ २ । २ । ९ ॥

षष्ठ्यन्तं सुबन्तं याजकादिभिः सुबन्तैः सह समस्यते स षष्ठीतत्पुरुषः समासो भवति । ब्राह्मणयाजकः । क्षत्रिययाजकः । प्रतिषेधबाधकमिदं सूत्रम् :—

याजक । पूजक । परिचारक । परिषेचक । परिवेषक । स्नातक । अध्यापक । उत्सादक । उद्वर्त्तक । हर्तृ । वर्त्तक । होतृ । पोतृ । भर्तृ । रथगणक । पतिगणक । इति याजकादयः ॥

## १६—राजदन्तादिषु परम् ॥ अ० । २ । २ । ३१ ॥

राजदन्तादिषु परमुपसर्जनं प्रयोक्तव्यम् । पूर्वनिपातापवादः । दन्तानां राजा, राजदन्तः । अनेन दन्तशब्दस्य पूर्वनिपातो बाध्यते । :—

राजदन्तः । अग्रेवणम् । लिप्तवासितम् । नग्नमुषितम् । सिक्तसंमृष्टम् । मृष्टलुञ्चितम् । अवक्लिन्नपक्वम् । अर्पितोप्तम् । उप्तगाढम् । उलूखलमुसलम् । तण्डुलकिण्वम् । दृषदुपलम् । आरग्वायनबन्धकी । चित्ररथबाह्लीकम् । आवन्त्यश्मकम् । शूद्रार्यम् । स्नातकराजानौ । विष्वक्सेनार्जुनौ । अक्षिभ्रुवम् । दारगवम् । धर्मार्थौ । अर्थधर्मौ । कामार्थौ । अर्थकामौ । शब्दार्थौ ( २ ) । अर्थशब्दौ । वैकारिमतम् । गजवाजम् । गोपालधानीपूलासम् । पूलासककरण्डम् । स्थूलपूलासम् । उशीरबीजम् । सिञ्जास्थम् । चित्रास्वाती । भार्य्यापती । जायापती ( ३ ) । जम्पती । दम्पती । पुत्रपती । पुत्रपशू । केशश्मश्रू । श्मश्रुकेशौ । शिरोबीजम् । सर्पिर्मधुनी । मधुसर्पिषी । आद्यन्तौ । अन्तादी । गुणवृद्धी । वृद्धिगुणौ । इति राजदन्तादयः ॥

---

( १ ) अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः ॥

( २ ) धर्मादिषूभयमिति वार्त्तिकेन कृतद्वन्द्वयोर्द्वयोरपि पर्य्यायेण पूर्वनिपातः । अत्र गणान्तेऽपि केशादयो धर्मादिषु द्रष्टव्याः ॥

( ३ ) अत्र जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते । अस्मिन् गणे सर्वेषु समासेषूपसर्जनमनुपसर्जनं वा निपात्यते । सर्वेषां च यथाप्राप्तानामपवादः ॥

## १७—वा॰ आहिताग्न्यादिषु ॥ अ॰ ॥ २ । २ । ३७ ॥

आहिताग्न्यादिषु निष्ठान्तस्य विभाषा पूर्वनिपातो भवति पक्षे च परनिपातः। आहितोऽग्निर्येन सः—

आहिताग्निः। अग्न्याहितः। जातपुत्रः। पुत्रजातः। जातदन्तः। जातश्मश्रुः। तैलपीतः। घृतपीतः। ऊढभार्यः। गतार्थः। आकृतिगणोऽयम् (१)। इत्याहिताग्न्यादयः ॥

## १८—कडाराः कर्मधारये ॥ अ॰ ॥ २ । २ । ३८ ॥

कर्मधारये समासे कडारादयः शब्दा विभाषा पूर्वं प्रयोक्तव्याः। कडारश्चासौ जैमिनिश्च कडारजैमिनिः। जैमिनिकडारः। इत्यादि। कडारादीनां गुणवाचकाद्विशेषणस्य पूर्वनिपातः प्राप्तः स बाध्यते :—

कडार। गडुल। काण। खञ्ज। कुण्ठ। खञ्जर। खलति। गौर। वृद्ध। भिक्षुक। पिङ्गल। तनु। वटर। इति कडारादयः। कर्मधारय इति किम्। कडारपुरुषो ग्रामः। अत्र बहुव्रीहौ माभूत् ॥

## १९—वा॰—तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम् (२) ॥ २।३।१८ ॥

प्रकृति। प्राय। गोत्र। सम। विषम। द्विद्रोण। पञ्चक। साहस्र। आकृतिगणोऽयम्। इति प्रकृत्यादयः ॥

## २०—गवाश्वप्रभृतीनि च ॥ अ॰ ॥ २ । ४ । ११ ॥

गवाश्वप्रभृतीनि कृतैकवद्भावानि द्वन्द्वरूपाणि सिद्धानि प्रातिपदिकानि निपात्यन्ते। गौश्चाश्वश्च :—

गवाश्वम्। गवाविकम्। गवैडकम्। अजाविकम्। अजैडकम्। कुब्जवामनम्। कुब्जकैरातम्। पुत्रपौत्रम्। श्वचण्डालम्। स्त्रीकुमारम्। दासीमाणवकम्। शाटीपिच्छकम्। उष्ट्रखरम्। उष्ट्रशशम्। मूत्रशकृत्। मूत्रपुरीषम्। यकृन्मेदः। मांसशोणितम्। दर्भशरम्। दर्भपूतीकम्। अर्जुनशिरीषम्। तृणोलपम्। दासीदासम्। कुटीकुटम्। भागवतीभागवतम् (३)। इति गवाश्वप्रभृतयः ॥

---

(१) अत्राकृतिगणेन गडुकण्ठादयोऽपि द्रष्टव्याः। कण्ठेगडुः। गडुकण्ठः। गडुशिराः। इत्यादि ॥

(२) प्रकृत्यादिभ्यस्तृतीयाविभक्तिर्यथा स्यात्। कर्तृकरणाभावादप्राप्ता विधीयते। प्रकृत्याऽभिरूपः। प्रकृत्या दर्शनीयः। इत्यादि ॥

(३) अत्र गणे यथोच्चारित एव द्वन्द्वो द्रष्टव्यः। तेन रूपान्तरे न भवति। गोश्वम्। गोश्वौ। अत्र पशुद्वन्द्वो विभाषैकवद् भवति ॥

## २१—न दधिपयआदीनि ॥ अ० ॥ २ । ४ । १४ ॥

दधिपयआदीनि शब्दरूपाणि द्वन्द्वे नैकवद्भवन्ति :—

दधिपयसी । सर्पिर्मधुनी । मधुसर्पिषी । ब्रह्मप्रजापती । शिववैश्रवणौ । स्कन्दविशाखौ । परिव्राट्कौशिकौ । परिव्राजककौशिकौ । प्रवर्ग्योपसदौ । शुक्लकृष्णौ । इध्माबर्हिषी । दीक्षातपसी । श्रद्धातपसी । मेधातपसी । अध्ययनतपसी । उलूखलमुसले । आद्यावसाने । श्रद्धामेधे । ऋक्सामे । वाङ्मनसे । इति दधिपयआदयः ॥

## २२—अर्द्धर्चाः पुंसि च ॥ अ० ॥ २ । ४ । ३१ ॥

अर्द्धर्चादयः शब्दाः पुंसि चान्नपुंसके च भाष्यन्ते :—

अर्द्धर्च । गोमय । कषाय । कार्षापण । कुतप । कपाट । शङ्ख । चक्र । गूथ । यूथ । ध्वज । कबन्ध । पद्म । गृह । सरक । कंस । दिवस । यूप । अन्धकार । दण्ड । कमण्डलु । मण्ड । भूत । द्वीप । द्यूत । चक्र । धर्म । कर्मन् । मोदक । शतमान । यान । नख । नखर । चरण । पुच्छ । दाडिम । हिम । रजत । सक्तु । पिधान । सार । पात्र । घृत । सैन्धव । औषध । आढक । चषक । द्रोण । खलीन । पात्रीव । षष्टिक । वार । बाण । प्रोथ । कपित्थ । शुष्क । शील । शुल्व । सीधु । कवच । रेणु । कपट । सीकर । मुसल । सुवर्ण । यूप । चमस । वर्ण । चीर । कर्ष । आकाश । अष्टापद । मङ्गल । निधन । निर्यास । जृम्भ । वृत्त । पुस्त । क्ष्वेडित । शृङ्ग । शृङ्खल । मधु । मूल । मूलक । शराव । शाल । वप्र । विमान । मुख । प्रग्रीव । शूल । वज्र । कर्पट । शिखर । कल्क । नाट । मस्तक । वलय । कुसुम । तृण । पङ्क । कुण्डल । किरीट । अर्बुद । अङ्कुश । तिमिर । आश्रम । भूषण । इल्कस । मुकुल । वसन्त । तडाग । पिटक । विटङ्क । माष । कोश । फलक । दिन । दैवत । पिनाक । समर । स्थाणु । अनीक । उपवास । शाक । कर्पास । चषाल । खण्ड । दर । विटप । रण । बल । मल । मृणाल । हस्त । सूत्र । ताण्डव । गाण्डीव । मण्डप । पटह । सौध । पार्श्व । शरीर । फल । छल । पुर । राष्ट्र । विश्व । अम्बर । कुट्टिम । मण्डल । ककुद । तोमर । तोरण । मञ्चक । पुङ्ख । मध्य । बाल । वल्मीक । वर्ष । वस्त्र । देह । उद्यान । उद्योग । स्नेह । स्वर । सङ्गम । निष्क । क्षेम । शूक । छत्र । पवित्र । यौवन । पानक । मूषिक । वल्कल । कुञ्ज । विहार । लोहित । विषाण । भवन । अरण्य । पुलिन । दृढ । आसन । ऐरावत । शूर्प । तीर्थ । लोमश । तमाल । लोह । दण्डक । शपथ । प्रतिसर । दारु । धनुस् । मान । तङ्क । वितङ्क । मव । सहस्र । ओदन । प्रवाल । शकट । अपराह्ण । नीड । शकल । कुणप । मुण्ड । पूत । मरु । लोमन । लिङ्ग । सीर । व्रत । ऋण । कडार । पूर्ण । पणव । विशाल ।

वुस्त । पुस्तक । पल्लव । निगड । खल । स्थूल । शार । नाल । प्रवर । कटक । कण्टक । छाल । कुमुद । पुराण । जाल । स्कन्ध । ललाट । कुङ्कुम । कुशल । विडङ्ग । पिण्याक । आर्द्र । हल । योध । विम्ब । कुक्कुट । कडप । खण्डल । पञ्चक । वसु । उद्यम । स्तन । स्तेन । चत्र । कलह । पालक । वर्चस्क । कूर्च । तण्डक । तण्डुल । इत्यर्द्धर्चादयः ॥

## २३—पैलादिभ्यश्च ॥ अ० ॥ २ । ४ । ५९ ॥

पैलादिप्रातिपदिकेभ्यो युवप्रत्ययस्य लुग्भवति । पीलाया अपत्यं पैलः । तस्य युवापत्यमिति फिञ् तस्य लुक् । पैलः पिता । पैलः पुत्रः । एवं शालङ्किः । इत्यादि ।

पैल । शालङ्कि । सात्यकि । सात्यकामि । देवि । औदमज्जि । औदव्रजि । औदमेघि । औदबुद्धि । दैवस्थानि । पैङ्गलायनि । राणायनि । रौहक्षिति । भौलिङ्गि । औद्गाहमानि । औज्जिहानि । रागचति । राणि । सौमनि । जहमानि । तद्राजाचाणः (१) आकृतिगणोयम् इति पैलादयः ॥

## २४—न तौल्वलिभ्यः ॥ अ० ॥ २ । ४ । ६१ ॥

तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुङ् न भवति तुल्वलस्य गोत्रापत्यं तौल्वलिः । तस्ययुवापत्यं तौल्वलायनः :—

तौल्वलि । धारणि । रावणि । पारणि । दैलीपि । देवलि । देवमति । दैवयज्ञि प्रावाहणि । मान्धातकि । आनुहारति । श्वाफल्कि । आनुमति । आहिंसि । आसुरि । आयुधि । नैमिषि । आसिबन्धकि । बैकि । पौष्करसादि । वैरकि । वैलकि वैहति । वैकर्णि । कारेणुपालि । कामलि । रान्धकि । आसुराहति । प्राणाहति पौष्कि । कान्दकि । दौषकगति । आन्तराहति । इति तौल्वल्यादयः ॥

## २५—यस्कादिभ्यो गोत्रे ॥ अ० ॥ २ । ४ । ६३ ॥

यस्कादिभ्यः प्रातिपदिकेभ्यः परस्यास्त्रीलिङ्गस्य बहुवचनेवर्त्तमानस्य गोत्रप्रत्ययस्य लुग्भवति यदि तेनैव गोत्रप्रत्ययेन कृतं बहुत्वं भवेत्तदा । यस्कस्य गोत्रापत्यं यास्कः । यास्कौ । यस्काः । लभ्याः । तेनैवेति किम् । प्रियौ यास्कौ येषां ते प्रिययास्काः अस्त्रियामिति किम् । यास्क्यः स्त्रियः । गोत्र इति किम् । यास्काश्छात्राः । :—

यस्क । लभ्य । दुह्य । अयःस्थूण । तृणकर्ण (२) । सदामत्त । कम्बलभार । अहियोग । कर्णाटक । पर्णाडक । पिण्डीजङ्घ । बकसक्थ (३) ।

---

(१) वङ्गानांराजा वाङ्गः । तस्ययुवापत्यम् वाङ्गः । अंगस्यापत्यमांगः पिता पुत्रो वा ॥

(२) यस्कादिपंचभ्यः शिवादित्वादण् ॥

(३) सदामत्तादिसप्तभ्य इञ् ॥

वस्ति । कद्रु । विस्रि । कद्रु । अजवस्ति । मित्रयु (१) । रक्षामुख । जङ्घारथ । मन्यक । उत्कासकटुकमन्थक । पुष्करसद् । विषपुट । उपरिमेखल । क्रोष्टुमान । क्रोष्टुपाद । शीर्षमाय (२) । खरप (३) । पदक । वर्मक (४) भन्दन (५) । भडिल । भण्डिल । भडित । भण्डित (६) । इतियस्कादयः ॥

## २६—नगोपवनादिभ्यः ॥ अ० ॥ २ । ४ । ६७ ॥

गोपवनादिप्रातिपदिकेभ्यः परस्य गोत्रप्रत्ययस्य बहुवचनविभक्तौ लुङ्न भवति यञञोश्चेति प्राप्तो लुक् प्रतिषिध्यते । गोपवनस्य गोत्रापत्यं गौपवनः । गौपवनौ । गौपवनाः । :—

गोपवन । शिग्रु । बिन्दु । भाजन । अश्व । अवतान । श्यामाक । श्वापर्ण । इत्यष्टौ बिदाद्यन्तर्गता गोपवनादयः ॥

## २७—तिककितवादिभ्यो द्वन्द्वे ॥ अ० ॥ २ । ४ । ६८ ॥

तिकादिभ्यः कितवादिभ्यश्च परस्य गोत्रप्रत्ययस्य द्वन्द्वसमासे बहुवचनविभक्तौ लुग्भवति । तैकानयश्च कैतवायनयश्चेत्यत्र तिकादिभ्यः फिञ् तस्य लुक् :—

तिककितवाः । वङ्खरभण्डीरथाः (७) उपकलमकाः (८) पफकनरकाः । बकनखश्वगुदपरिणद्धाः (९) । उब्जककुभाः (१०) । लङ्कशान्तमुखाः (११)

---

(१) वस्त्यादिषड्भ्यो गृष्ट्यादित्वाड् ढञ् ॥

(२) रक्षामुखाद्येकादशभ्य इञ् ॥

(३) खरपशब्दान्नडादित्वात्फक् ॥

(४) पदकवर्मकाभ्यामिञ् ॥

(५) भन्दनशब्दाच्छिवादित्वादण् ॥

(६) भडिलादिचतुर्भ्योऽश्वादित्वात् फञ् ॥

(७) वाङ्खरयश्च भांडीरथयश्चेतीञ् ॥

(८) औपकायनश्च लामकायनश्चेति नडादित्वात् फक् ।

(९) पाफकयश्च नारकयश्च, बाकनखयश्च, श्वागुदपरिणद्धयश्च सर्वेभ्योऽत इञ् तस्य लुक् ॥

(१०) औब्जयश्च, इञ् । काकुभाश्च, शिवादित्वादण् । तयोर्लुक् ॥

(११) लाङ्कयश्च शान्तमुखयश्च, इञ् तस्य लुक् ॥

उरसलङ्कटाः (१)। भ्रष्टककपिष्ठलाः। कृष्णाजिनकृष्णसुन्दराः (२) अग्निवेशदासेरकाः (३)॥ इतितिककितवादयः॥

## २८—उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥ अ० ॥ २। ४। ६९॥

उपकादिप्रातिपदिकेभ्यः परस्य गोत्रप्रत्ययस्य बहुवचनविभक्तौ द्वन्द्वे चाद्वन्द्वे च विभाषा लुग्भवति। अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम्। एतेषां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठिताः। उपकलमकाः। भ्रष्टककपिष्ठलाः। कृष्णाजिनकृष्णसुन्दराः। तेभ्यः पूर्वसूत्रेणैव नित्यलुग्भवति। अद्वन्द्वेत्वनेन विकल्पः। उपकाः। औपकायनाः। लमकाः। लामकायनाः। शेषाणां द्वन्द्वेऽद्वन्द्वे च विकल्पः:—

उपक। लमक। भ्रष्टक। कपिष्ठल। कृष्णाजिन। कृष्णसुन्दर। पण्डारक। अण्डारक। गडुक। सुपर्य्यक। सुपिष्ट। मयूरकर्ण। खारीजङ्घ। शलावल। पतञ्जल। कठेरणि। कुषीतक। काशकृत्स्न। निदाघ। कलशीकण्ठ। दामकण्ठ। कृष्णपिङ्गल। कर्णक। पर्णक। जटिलक। बधिरक। जन्तुक। अनुलोम। अर्द्धपिङ्गलक। प्रतिलोम। प्रतान। अनभित। चूडारक। उदङ्क। सुधायुक। अबन्धक। पदञ्चल। पानुपद। अपजरध। कमक। लेखाभ्र। कमन्दक। पिञ्जल। मसूरकर्ण। मदाघ। कदामत्त। इत्युपकादयः॥

## २९—भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः॥ अ० ॥ ३। १। १२॥

अच्व्यन्तेभ्यो भृशादिप्रातिपदिकेभ्यो भवत्यर्थे क्यङ् प्रत्ययो भवति हलन्तानां चान्त्यलोपः। अभृशो भृशो भवतीति भृशायते। सुमनायते। अच्वेरिति किम्। भृशीभवति। अत्र मा भूत्:—

भृश। शीघ्र। मन्द। चपल। पण्डित। उत्सुक। उन्मनस्। अभिमनस्। सुमनस्। दुर्मनस्। रहस्। रेहस्। शश्वत्। बृहत्। वेहत्। नृषत्। शुधि। अधर। ओजस्। वर्चस्। विमनस्। रभन्। हन्। रोहत्। शुचिस्। अजरस्। इति भृशादिः॥

---

(१) औरसायनश्च, तिकादित्वात् फिञ्। लाङ्कटयश्च, इञ् तयोर्लुक्॥

(२) भ्राष्टकयश्च, कापिष्ठलयश्च। कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च। अत इञ् तस्य लुक्॥

(३) आग्निवेश्याश्च, गर्गादित्वाद् यञ्। दासेरकयश्च, अत इञ् तयोर्लुक्।

## ३०—लोहितादिडाज्भ्यः क्यष् ॥ अ० ॥ ३ । १ । १३ ॥

अच्व्यन्तेभ्यो लोहिताभ्यो डाजन्तेभ्यश्च भवत्यर्थे क्यष् प्रत्ययो भवति। अलोहितो लोहितो भवति लोहितायते । लोहितायति । अपटपटा पटपटा भवति पटायति। पटपटायते :–

लोहित । नील । हरित । पीत । मद्र । फेन । मन्द । आकृतिगणत्वात् । वर्मन् । निद्रा । करुणा । कृपा । इति लोहितादयः ॥

## ३१—भविष्यति गम्यादयः ॥ अ० ॥ ३ । ३ । ३ ॥

गम्यादयः शब्दा भविष्यति काले साधवो भवन्ति। ग्रामंगमी :–

गमी । आगामी । प्रस्थायी ।प्रतिरोधी ।प्रतिबोधी । प्रतियोधी । प्रतियोगी ॥ प्रतियायी । आयायी । भावी । इति गम्यादयः ॥

## ३२—षिद्भिदादिभ्योऽङ् ॥ अ० ॥ ३ । ३ । १०४ ॥

षिद्भ्यो भिदादिभ्यश्च धातुभ्यः स्त्रियामङ् प्रत्ययो भवति। जृष्–जरा । त्रपा । भिदादयः पठ्यन्ते :—

भिदा (१) । छिदा । विदा । चिपा ॥ गुहा गिर्योषध्योः ॥ श्रद्धा । मेधा । गोधा । आरा । हारा । कारा । क्षिया । भारा । धारा । रेखा । लेखा । चूडा । पीडा । वपा । वसा । सृजा ॥ क्रपेः संप्रसारणं च ॥ कृपा ॥ भिदा, विदारणे ॥ छिदा, द्वैधीकरणे ॥ आरा, शस्त्राम् ॥ धारा प्रपाते । इति भिदादयः ॥

## ३३—वा०—संपदादिभ्यः क्विप् (२) ॥ अ० ॥ ३ । ३ । १०८॥

संपत् । विपत् । प्रतिपत् । आपत् । परिषत् । इति संपदादयः ॥

## ३४—भीमादयोऽपादाने ॥ अ० ॥ ३ । ४ । ७४ ॥

भीमादयः शब्दा उणादिषु अपादानकारके निपात्यन्ते :–

भीमः । भीष्मः । भयानकः । वरुः । चरुः । भूमिः । रजः । संस्कारः । संक्रन्दनः । प्रपतनः । समुद्रः । स्रुचः । स्रुक् । खलतिः ॥ इति भीमादयः ॥

---

(१) भिदादिगणेऽयमर्थनियमः स महाभाष्यकारेणैव कृतोऽस्ति । विदारणादन्यार्थे भित्तिरिति सर्वत्रार्थान्तरे क्तिन् ॥

(२) संपदादिगणपठितेभ्य एव स्त्रियां क्विप् प्रत्ययो भवति । संपदादिराकृतिगणो विज्ञेयः । कृत्ल्युटो बहुलमिति बहुलवचनात् क्तिन्नपि भवति । संपत्तिः। विपत्तिः । इत्यादि ॥

## ३५—अजाद्यतष्टाप् ॥ अ० ॥ ४ । १ । ४ ॥

अजादिभ्यः प्रातिपदिकेभ्योऽकारान्ताच्च स्त्रियां टाप् प्रत्ययो भवति । अजा । देवदत्ता । अदितितपरकरणं तत्कालार्थम् । कीलालपाः, ब्राह्मणी । अत्र टाप् न भवति अजादिग्रहणं तु जात्यादिलक्षणस्य ङीषादेर्बाधनार्थम् :—

अजा । एडका । चटका । अश्वा । मूषिका (१) । बाला । होढा । पाका । वत्सा । मन्दा । विलाता । पूर्वापहरणा । अपरापहरणा (२) ॥ संभस्त्राजिनशणपिण्डेभ्यः फलात् ॥ संफला । (३) भस्त्रफला । अजिनफला । शणफला । पिण्डफला ॥ सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् ॥ (४) सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा ॥ शूद्रा चामहत्पूर्वा जातिः ॥ (५) क्रुञ्चा । उष्णिहा । देवविशा (६) ज्येष्ठा । कनिष्ठा । मध्यमा । (७) कोकिला । (८) मूलान्नञः । (९) अमूला । इत्यजादयः ॥

## ३६—न षट्स्वस्रादिभ्यः ॥ अ० ॥ ४ । १ । १० ॥

षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च प्रातिपदिकेभ्यः स्त्रीप्रत्ययो न भवति । सप्त । अष्ट :— स्वसा । दुहिता । ननान्दा । याता । माता । तिस्रः । चतस्रः । इति स्वस्रादयः ॥

## ३७—षिद्गौरादिभ्यश्च ॥ अ० ॥ ४ । १ । ४१ ॥

षिद्भ्यो गौरादिभ्यश्च । प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवति नर्त्तकी खनकी । रजकी । गौरादिभ्यः । गौरी मत्सी :—

गौर । मत्स्य । मनुष्य । शृङ्ग । हय । गवय । मुकय । ऋष्य । पुट । द्रुण । द्रोण । हरिण । कण । पटर । उकण । आमलक । कुवल । बदर । बिम्ब । तर्कार । शर्कार । पुष्कर ।

(१) अजादिभ्यः पंचभ्यो जातिलक्षणो यो ङीष् प्राप्तः स बाध्यते ॥

(२) बालादिभ्यः षड्भ्यो वयसि ङीप् प्राप्तः ॥

(३) आभ्यां टिल्लक्षणो ङीप् प्राप्तः ॥

(४) समादिभ्यः फलात् सदादिभ्यश्च पुष्पाद् बहुव्रीहौ यः पाककर्णेति सूत्रेण ङीष् प्राप्तः स बाध्यते ॥

(५) अमहत्पूर्वाच्छूद्रशब्दाज्जातौ टाप् । शूद्रा । पुंयोगे तु ङीषेव शूद्रस्य स्त्री शूद्री । अमहदिति किम् । महाशूद्री ॥

(६) कुञ्चादिभ्यस्त्रिभ्योऽप्राप्तष्टाब्विधिः ॥

(७) ज्येष्ठादिभ्यस्त्रिभ्यः पुंयोगे ङीष् प्राप्तोऽनेन बाध्यते ज्येष्ठस्य भार्या ज्येष्ठा ॥

(८) कोकिलशब्दाज्जातिलक्षणो ङीष् प्राप्तः ॥

(९) मूलशब्दाद् बहुव्रीहौ पाककर्णेति ङीष् प्राप्तः । नास्ति मूलमस्याः साऽमूला

शिखण्ड । सुषम । सलन्द । गडुज । आनन्द । सृपाट । सृगेठ । आढक । शष्कुल । सूर्म । सुब । सूर्य । पूष । मूष । घातक । सकलूक । सल्लक । मालक । मालत । साल्वक । वेतस । अतस । पृस । मह । मठ । छेद । श्वन् । तक्षन् । अनडुही । अनड्वाही । एषण,करणे । देह । काकादन । गवादन । तेजन । रजन । लवण । पान । मेध । गौतम । आप । स्थूण । भौरि । भौलिक । भौलिङ्गि । औद्गाहमानि । आलिङ्गि । आपिच्छिक । आरट । टोट । नट । नाट । मूलाट । शातन । पातन । पावन । आस्तरण । अधिकरण । एत । अधिकार । आग्रहायणी । प्रत्यवरोहिणी । सेवन । सुमङ्-गलात्संज्ञायाम् । सुन्दर । मण्डल । पट । पिण्ड । विटक । कुर्द । गूर्द । पाण्ट । लोफाण्ट । कन्दर । कन्दल । तरुण । तलुन । बृहत् । महत् । सौधर्म । रोहिणी,नक्षत्रे रेवती,नक्षत्रे । विकल । निष्कल । पुष्कल ॥ कटाच्छ्रोणिवचने ॥ पिङ्गल । भट्ट । दृहन । कन्द । काकण । पिप्पल्यादयश्च । पिप्पली । हरीतकी । कोशातकी । शमी । करीरी । पृथिवी । क्रोष्टी । मातामह (१) । पितामह । इति गौरादयः ॥

## ३८—बह्वादिभ्यश्च ॥ अ० ॥ ४ । १ । ४५ ॥

बह्वादिप्रातिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति । बह्वी । बहुः ।

बहु । पद्धति । अञ्चति । अङ्कति । अंहति । वहति । शकटि ॥ शक्तिः शस्त्रे ॥ शारि । वारि । गति । अहि । कपि । मुनि । यष्टि ॥ इतः प्राण्यङ्गात् ॥ कृतिकारा-दक्तिनः ॥ सर्वतोऽक्तिन्नर्थादित्येके (२) ॥ चण्ड । अराल । कमल । कृपाण । विकट । विशाल । विशंकट । भरुज । ध्वज ॥ चन्द्रभागान्नद्याम् ॥ चन्द्रभागी । कल्याण । उदार । पुराण । अहन् ॥ इति बह्वादयः ॥

## ३९—न क्रोडादिबह्वचः ॥ अ० ॥ ४ । १ । ५६ ॥

क्रोडाद्यन्तात् बह्वजन्ताच्च प्रातिपदिकात् स्त्रियां ङीष्प्रत्ययो न भवति । स्वाङ्गादिति प्राप्तः प्रतिषिध्यते । शोभनक्रोडा । शोभनखुरा । पृथुजघना ।—

क्रोड । खुर । बाल । शफ । गुद । घोण । नख । मुख । भग । गल । आकृतिगणोऽयम् । इति क्रोडादयः ॥

---

(१) अत्र डामहच् प्रत्ययस्य षित्वादेव ङीषि सिद्धे पुनः पाठेन षिल्लक्षणस्य ङीषोऽनित्यत्वं ज्ञाप्यते तेन दंष्ट्रा, इति सिद्धं भवति । पृथिवीशब्दे औणादिकः षिवन् प्रत्ययस्य षित्वान् ङीषि सिद्धे उणादीनामव्युत्पन्नत्वज्ञापनार्थः पाठः ॥

(२) इकारान्तात् प्राण्यङ्गवाचकान् ङीष् भवति । अङ्गुली । इकारान्तात् कृदन्तात् स्त्रियां ङीष् । कृषी । भूमी । वापी । केषांचिन्मते क्तिन्नधिकारस्थादिकारान्तमात्रादेव ङीष् न भवति । तदा कृषिः । वापिः । इत्येव ॥

## ४०—शार्ङ्गरवाद्यञो ङीन् ॥ अ० ॥ ४ । १ । ७३ ॥

शार्ङ्गरवादिभ्योऽञन्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीन् प्रत्ययो भवति । शार्ङ्गरवी । वैदी । जातिग्रहणमत्रानुवर्त्तते तेन जातिलक्षणो ङीषऽनेन बाध्यते न पुंयोगलक्षणः :—

शार्ङ्गरव । कापटव । गौगुलव । ब्राह्मण । गौतम । कामण्डलेय । ब्राह्मकृतेय । आनिचेय । आनिधेय । आशोकेय । वात्स्यायन । मौञ्जायन । कैकसेय । काव्य । शैव्य । एहि । पर्य्येहि । आश्मरथ्य । औदपान । अराल । चण्डाल । वतण्ड । भोगवद्गौरिमतोः संज्ञायाम् ॥ भोगवती । गौरिमती ॥ नृनरयोर्वृद्धिश्च ॥ नारी । इति शार्ङ्गरवादयः ॥

## ४१-क्रौड्यादिभ्यश्च ॥ अ० ॥ ४ । १ । ८० ॥

क्रौड्यादिप्रातिपदिकेभ्यः स्त्रियां ष्यङ् प्रत्ययो भवति । अगुरूपोत्तमार्थं आरम्भः । क्रौड्या । लाड्या :—

क्रौडि । लाडि । व्याडि । आपिशलि । आपक्षिति । चौपयत । चैटयत । शैकयत । वैल्वयत । वैकल्यत । सौधातकि ॥ सूतात् युवत्याम् ॥ सूत्या, युवतिः ॥ भोज, क्षत्रिये ॥ भोज्या, क्षत्रिया । भौरिकि । भौलिकि । शाल्मलि । शालास्थलि । कापिष्ठलि । गौकक्ष्य ॥ इति क्रौड्यादयः ॥

## ४२—अश्वपत्यादिभ्यश्च ॥ अ० ॥ ४ । १ । ८४ ॥

अश्वपत्यादिप्रातिपदिकेभ्यः प्राग्दीव्यतीयेष्वर्थेष्वण् प्रत्ययो भवति । पत्युत्तरपदात् प्राप्तस्य ण्यस्यापवादः । आश्वपतम् । शातपतम् :—

अश्वपति । शतपति । धनपति । गणपति । राष्ट्रपति । कुलपति । गृहपति । धान्यपति । पशुपति । धर्मपति । सभापति । प्राणपति । क्षेत्रपति । स्थानपति । यज्ञपति । धन्वपति । अधिपति । बन्धुपति । इत्यश्वपत्यादयः ॥

## ४३—उत्सादिभ्योऽञ् ॥ अ० ॥ ४ । १ । ८६ ॥

उत्सादिभ्यः प्राग्दीव्यतीयेष्वर्थेष्वञ् प्रत्ययो भवति । औत्सः । औदपानः । अणस्तदपवादानां च बाधकः :—

उत्स । उदपान । विकर । विनोद । महानद । महानस । महाप्राण । तरुण । तलुन । वष्क यासे (१) ॥ धेनु । पृथिवी । पंक्ति । जगती । त्रिष्टुप् । अनुष्टुप् ।

(१) वष्कयशब्दादसे ऽर्थात् केवलादेवाञ् । तदन्तात्त्वणेव भवति ॥

जनपद । भरत । उशीनर । ग्रीष्म । पीलु । कुल । उदस्थान, देशे ॥ पृष, दंशे (१) ॥ भल्लकीय । रथन्तर । मध्यन्दिन । बृहत् । महत् । सत्वन्तु (२) । कुरु । पञ्चाल । इन्द्रावसान । उष्णिक् । ककुप् । सुवर्ण । सुपर्ण । देव । ग्रीष्मादच्छन्दसि (३) ॥ इत्युत्सादयः ॥

## ४४—बाह्वादिभ्यश्च ॥ अ० ॥ ४ । १ । ९६ ॥

बाह्वादिशब्देभ्योऽपत्यसामान्ये इञ् प्रत्ययो भवति । बाहोरपत्यं बाहविः । सौमित्रिः । इत्यादि :—

बाहु । उपबाहु । विवाकु । शिवाकु । वटाकु । उपबिन्दु । वृक । चूडाला । मूषिका । बलाका । भगला । छगला । ध्रुवका । धुवका । सुमित्रा । दुर्मित्रा । पुष्करसत् । अनुहरत् । देवशर्मन् । अग्निशर्मन् । कुनामन् । सुनामन् । पञ्चन् । सप्तन् । अष्टन् ।। अमितौजसः सलोपश्च (४) ॥ उदञ्चु । शिरस् । शराविन् । क्षेमवृद्धिन् । शृङ्खलातोदिन् । खरनादिन् । नगरमर्दिन् । प्राकारमर्दिन् । लोमन् । अजीगर्त्त । कृष्ण । सलक । युधिष्ठिर । अर्जुन । साम्ब । गद । प्रद्युम्न । राम । उदङ्कः संज्ञायाम् ॥ सम्भूयोम्भसोः सलोपश्च ॥ (५) ॥ आकृतिगणोऽयम् (६) ॥ इति बाह्वादयः ॥

## ४५—गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ अ० ॥ ४ । १ । ९८ ॥

गोत्रसंज्ञकेऽपत्ये वाच्ये कुञ्जादिभ्यश्च्फञ् प्रत्ययो भवति । इञोऽपवादः । कुञ्जस्य गोत्रापत्यं कौञ्जायन्यः । कौञ्जायन्यौ । कौञ्जायनाः । स्वार्थे ञ्यस्तस्य तद्राजत्वाद्बहुषु लुक् । गोत्र इति किम् । कुञ्जस्यानन्तरापत्यं कौञ्जिः :—

कुञ्ज । ब्रध्न । शङ्ख । भस्मन् । गण । लोमन् । शठ । शाक । शाकट । शुण्डा । शुभ । विपाश । स्कन्द । स्तम्भ । शुम्भा । शिव । शुभंया । इति कुञ्जादयः ॥

---

(१) उदस्थानशब्दाद्देशार्थ एवाञ् । अन्यार्थेऽणेव भवति । एवमन्यत्रापि ॥

(२) अत्र सत् शब्दान्मतुप्—सत्वन्, तु, अव्ययम् । सत्वतोऽपत्यं सात्वताः ॥

(३) अत्र छन्दःशब्देन वृत्तं गृह्यते न तु वेदः । ततोऽन्यत्राञ् ॥

(४) अमितौजसोऽपत्यमामितौजिः ॥

(५) सम्भूयसोऽपत्यं साम्भूयिः । आम्भिः ॥

(६) सूत्रस्थचकारेणाकृतिगणत्वं बोध्यते । तेन । जाम्बिः । ऐन्द्रशर्म्मिः । आजधेनविः । आजबन्धविः । औडुलोमिः । इत्यादिष्विञ् सिद्धो भवति ॥

## ४६—नडादिभ्यः फक् ॥ अ० ॥ ४ । १ । ९९ ॥

नडादिप्रातिपदिकेभ्यो गोत्रापत्ये फक् प्रत्ययो भवति । नडस्य गोत्रापत्यं नाडायनः । चारायणः :—

नड । चर । बक । मुञ्ज । इतिक । इतिश । उपक । लमक ॥ शलङ्कु शलङ्कञ्च (१) ॥ सप्तल । वाजप्य । तिक । अग्निशर्मन् वृषगणे । प्राण । नर । सायक । दास । मित्र । द्वीप । पिङ्गर । पिङ्गल । किङ्कर । किङ्कल । कातर । कातल । काश्य । काश्यप । काव्य । अज । अमुष्य ॥ कृष्णरणौ ब्राह्मणवासिष्ठयोः (२) ॥ अमित्र । लिगु । चित्र । कुमार ॥ क्रोष्टु क्रोष्टञ्च (३) ॥ लोह । दुर्ग । स्तम्भ । शिंशपा । अग्र । तृण । शकट । सुमनस् । सुमत । मिमत । ऋच् । जत् । युगन्धर । हंसक । दण्डिन् । हस्तिन् । पंचाल । चमसिन् । सुकृत्य । स्थिरक । ब्राह्मण । चटक । बदर । अश्वक । खरप । कामुक । ब्रह्मदत्त । उदुम्बर । शोण । अलोह । दण्ड । एक । वानव्य । शावक । नाव्य । अन्वजत् । अन्तजन । इत्वरा । अंशक । अश्वला । अध्वरादण्डय । इति नडादयः ॥

## ४७—अनृष्यानन्तर्ये बिदादिभ्योऽञ् ॥ अ० ॥ ४ । १ । १०४ ॥

बिदादिप्रातिपदिकेभ्यो गोत्रापत्येऽञ् प्रत्ययो भवति । येऽत्र गणेऽनृषिवाचकास्तेभ्यस्त्वनन्तरापत्य एव । बिदस्य गोत्रापत्यं बैदः । पुत्रस्यानन्तरापत्यं पौत्रः । दौहित्रः :—

बिद । उर्व । कश्यप । कुशिक । भरद्वाज । उपमन्यु । किलालप । किदर्भ । विश्वानर । ऋष्टिषेण । ऋतभाग । हर्यश्व । प्रियक । आपस्तम्ब । कूचवार । शरद्वत् । शुनक । धेनु । गोपवन । शिग्रु । बिन्दु । भाजन । अश्वावतान । श्यामाक । श्यमाक । श्यापर्ण । हरित । किन्दास । वह्यस्क । अर्कलूष । वध्योष । विष्णुवृद्ध । प्रतिबोध । रथन्तर । रथीतर । गविष्ठिर । निषाद । मठर । मृद । पुनर्भू । पुत्र । दुहितृ । ननान्दृ । परस्त्री, परशुं च (४) ॥ किता । सम्बक । शावली । श्यायक । अलस । इति बिदादयः ॥

---

(१) शलङ्कु शब्दस्य शलङ्कादेशः । शलङ्कोऽपत्यं शालङ्कायनः ॥

(२) कृष्णस्यापत्यं कार्ष्णायनो ब्राह्मणः । राणायनो वासिष्ठः ॥

(३) क्रोष्टोरपत्यं क्रौष्टः ॥

(४) परस्त्रिया अपत्यं पारशवः

## ४८—गर्गादिभ्यो यञ् ॥ अ० ॥ ४ । १ । १०५ ॥

गर्गादिभ्योऽन्तरे गोत्रापत्ये यञ् प्रत्ययो भवति । गार्ग्यः। अनन्तरापत्ये तु गार्गिरित्येव :—

गर्ग । वत्स । वाजाऽसे (१) संकृति । अज । व्याघ्रपात् । विदभृत् । प्राचीनयोग । अगस्ति । पुलस्ति । रेभ । अग्निवेश । शङ्ख । शठ । धूम । अवट । चमस । धनञ्जय । मनस । वृक्ष । विश्वावसु । जनमान । लोहित । संशित । बभ्रु । मण्डु । मक्षु । अलिगु । शङ्कु । लिगु । गुलु । मन्तु । जिगीषु । मनु । तन्तु । मनायी । भूत । कथक । कष । तण्ड । वतण्ड । कपि । कत । कुरुकत । अनडुह् । कण्व । शकल । गोकक्ष । अगस्त्य । कुण्डिन । यज्ञवल्क । उभय । जात । विरोहित । वृषगण । रहूगण । शण्डिल । वण । कचुलुक । मुद्गल । मुसल । पराशर । जतूकर्ण । मन्त्रित । संहित । अश्मरथ । शर्कराक्ष । पूतिमाष । स्थूण । अररक । पिङ्गल । कृष्ण । गोलुन्द । उलूक । तितिक्ष । भिषज् । भडित । भण्डित । दल्भ । चिकित । देवहू । इन्द्रहू । एकलू । पिप्पलू । वृदग्नि । जमदग्नि । सुलोभिन् । उकत्थ । कुटीगु ॥ इतिगर्गादयः ॥

## ४९—अश्वादिभ्यः फञ् ॥ अ० ॥ ४ । १ । ११० ॥

अश्वादिभ्यो गोत्रापत्ये फञ् प्रत्ययो भवति । आश्वायनः । आश्मायनः । येस्मिन् गणेऽपत्यैकप्रत्ययान्ताः पठ्यन्ते तेषु सामर्थ्याद्यूनिप्रत्ययो विज्ञायते :—

अश्व । अश्मन् । शङ्ख । विद । पुट । रोहिण । खर्जूर । । खर्जूल । पिञ्जूर । भडिल । भण्डिल । भडित । भण्डित । भण्डिक । प्रहृत । रामोद । क्षत्र । ग्रीवा । काश । गोलाङ्क्य । अर्क । स्वन । ध्वन । पाद । चक्र । कुल । पवित्र । गोमिन् । श्याम । धूम । धूम्र । वाग्मिन् । विश्वानर । कुट । वेश । आत्रेय । नक्ष । तड । नड । ग्रीष्म । अर्ह । विशम्य । विशाला । गिरि । चपल । चुनम । दासक । वैल्य । धर्म । आनडुह्य । पुंसिजात । अर्जुन । शूद्रक । सुमनस् । दुर्मनस् । क्षान्त । प्राच्य । कित । काण । चुम्प । श्रविष्ठा । वीक्ष्य । पविन्दा । कुल्स । आतव । कितव । शिव । खदिर ॥ आत्रेय, भारद्वाजे । भरद्वाज, आत्रेये (२) ॥ पथ । कन्थु । अुव । सूनु । कर्कटक । रुक्ष । तरुक्ष । तलुक्ष । प्रतुल । विलम्ब । विष्णुज । इत्यश्वादयः ॥

---

(१) असेऽसमासे वाजशब्दाद्यञ् । सुवाजस्यापत्यं सौवाजिः । अत्र यञ् न भवति ॥

(२) आत्रेयशब्दाद् भारद्वाजगोत्रे फञ् । आत्रेयायणो भारद्वाजः । भारद्वाजशब्दादात्रेयगोत्रे फञ् । भारद्वाजायन आत्रेयः ॥

## ५०—शिवादिभ्योऽण् ॥ अ० ॥ ४ । १ । ११२ ॥

शिवादिभ्यः सामान्यापत्येऽण् प्रत्ययो भवति । यथाप्राप्तानामिञादीनामणपवादानां च बाधकः । शिवस्यापत्यं शैवः :—

शिव । प्रोष्ठ । प्रोष्ठिक । चण्ड । भण्ड । जम्भ । मुनि । सन्धि । भूरि । कुठार । अनभिम्लान । अनभिग्लान । ककुत्स्थ । कहोड । लेख । रोध । खञ्जन । कोहड । पिष्ट । हैहय । खञ्जार । खञ्जाल । सुरोहिका । पर्ण । कहूष । परिल । वतण्ड । तृण । कर्ण । क्षीरह्रद । जलह्रद । परिषिक । जटिलिक । गोफिलिक । बधिरिका । मञ्जीरक । वृष्णिक । रेख । आलेखन । विश्रवण । रवण । वर्त्तनाक्ष । पिटक । पिटाक । तृक्षाक । नभाक । ऊर्णनाभ । जरत्कारु । उत्क्षिपा । रोहितिक । आर्यश्वेत । सुपिष्ट । खर्जूरकर्ण । मसूरकर्ण । तूणकर्ण । मयूरकर्ण । खडरक । तक्षन् । ऋष्टिषेण । गङ्गा । विपाशा । यस्क । लह्य । द्रुघ । अयःस्थूण । भलन्दन । विरूपाक्ष । भूमि । इला । सपत्नी ॥ द्व्यचो नद्याः ॥ त्रिवेणी, त्रिवणं च (१) । कह्वय । कबोध । परल । ग्रीवाक्ष । गोभिलिक । राजल । तडाक । वडाक । इति शिवादयः ॥

## ५१—शुभ्रादिभ्यश्च ॥ अ० ॥ ४ । १ । १२३ ॥

शुभ्रादिप्रातिपदिकेभ्योऽपत्ये ढक् प्रत्ययो भवति । यथा प्राप्तमिञादीनामपवादः । शुभ्रस्यापत्यं शौभ्रेयः :—

शुभ्र । विष्टपुर । ब्रह्मकृत । शतद्वार । शतावर । शलाका । शालाचल । शलाकाभ्रू । लेखाभ्रू । विमातृ । विधवा । कृकसा । रोहिणी । रुक्मिणी । दिशा । शालूक । अजवस्ति । शकन्धि । लक्षणश्यामयोर्वसिष्ठे (२) ॥ गोधा । कृकलास । अणीव । प्रवाहण । भरत । भारत । भारम । मृकण्डु । मघष्टु । मकष्टु । कर्पूर । इतर । अन्यतर । आलीढ । सुदत्त । सुचक्षस् । सुनामन् । कद्रु । तुद । अकशाप । कुमारिका । किशोरिका । कुवेणिका । जिह्माशिन । परिधि । वायुदत्त । ककल । खट्वर । अम्बिका । अशोका । शुद्धपिङ्गला । खडोन्मत्ता । अनुदृष्टि । जरतिन् । बलिवर्दिन् । विग्रज । बीज । श्वन् । अश्मन् । अश्व । अजिर । स्थूल । सृकण्डू । मकष्टु । यमष्टु । काष्टु । सृकण्ड । मृकण्ड । गुद । रूद । कुशेरिका । शकल । शवल । उग्र । अजिन ॥ इति शुभ्रादयः ॥

---

(१) स्त्रीवाचकाद् द्व्यच इति सूत्रेण ढक् प्राप्तः स नदीवाचकान्माभूत् । रेवाया अपत्यं रैवः । त्रिवेण्यास्त्रिवणादेशो विशेषः । त्रिवेण्या अपत्यं त्रैवणः ॥

(२) लक्षणस्यापत्यं लाक्षणेयो वसिष्ठः । श्यामाया अपत्यं श्यामेयो वसिष्ठः । मानुषो वाचकात् श्यामाशब्दादण् प्राप्तः सोऽनेन बाध्यते ॥

## ५२—कल्याण्यादीनामिनङ् ॥ अ० ॥ ४ । १ । १२६ ॥

कल्याण्यादिप्रातिपदिकेभ्योऽपत्ये ढक् प्रत्ययो भवति तस्मिन् सति इनङादेशः। कल्याण्या अपत्यं काल्याणिनेयः। सौभागिनेयः (१)। :–

कल्याणी। सुभगा। दुर्भगा। बन्धकी। अनुदृष्टि। अनुसृष्टि। जरती। बलीवर्दी। ज्येष्ठा। कनिष्ठा। मध्यमा। परस्त्री। इति कल्याण्यादयः॥

## ५३—गृष्ट्यादिभ्यश्च ॥ अ० ॥ ४ । १ । १३६ ॥

गृष्ट्यादिप्रातिपदिकेभ्योऽपत्ये ढञ् प्रत्ययो भवति। अणादीनामपवादः। गृष्टेरपत्यं गार्ष्टेयः। :–

गृष्टि। हृष्टि। हलि। बलि। विश्रि। कुद्रि। अजबस्ति। मित्रयु। फलि। अलि। दृष्टि। इति गृष्ट्यादयः॥

## ५४—रेवत्यादिभ्यष्ठक् ॥ अ० ॥ ४ । १ । १४६ ॥

रेवत्यादिभ्योऽपत्ये ठक् प्रत्ययो भवति। ढगादीनामपवादः। रेवत्या अपत्यं रैवतिकः :–

रेवती। अश्वपाली। मणिपाली। द्वारपाली। वृकवञ्चिन्। वृकग्राह। कर्णग्राह। दण्डग्राह। कुक्कुटाक्ष। वृकबन्धु। चामरग्राह। ककुदाक्ष॥ इति रेवत्यादयः॥

## ५५—कुर्वादिभ्यो ण्यः ॥ अ० ॥ ४ । १ । १५१ ॥

कुर्वादिप्रातिपदिकेभ्योऽपत्ये ण्यः प्रत्ययो भवति। कुरोरपत्यं कौरव्यः। काव्यः:–

कुरु। गर्ग। मङ्गुष। अजमारक। रथकार। वावदूक। सम्राजः क्षत्रिये (२) कवि। मति। वाक्। पितृमत्। इन्द्रजालि। दामोष्णीषि। गणकारि। कैशोरि। कापिञ्जलादि। कुट। शलाका। मुर। एरक। अभ्र। दर्भ। केशिनी। वेनाच्छन्दसि॥ शूर्पणाय। श्यावनाय। श्यावरथ। श्यावपुत्र। सत्यंकार। वडभीकार। शङ्कु। शाक। पथिकारिन्। मूढ। शकन्धु। कर्तृ। हर्तृ। शाकिन्। इनपिण्डी। विस्फोटक। काक। स्फाण्टक। शाकिन्। घातकि। धेनुजि। वृत्तिकार। वामरथस्य कण्वादिवत् स्वरवर्जम् (३। इतिकुर्वादयः॥

---

(१) कल्याण्यादिभ्यो ढक् तु सिद्ध आदेशार्थं वचनम्। हृदभसिन्ध्वन्त इत्युभयपदवृद्धिः॥

(२) सम्राट्शब्दात् क्षत्रिये वाच्येऽण् भवति सम्राजोऽपत्यं साम्राज्यः क्षत्रियः॥

(३) वामरथशब्दाण् ण्य प्रत्ययो भवति कण्वादिवच्च स्वरर्जकार्यमतिदिश्यते। कण्वादयो गर्गाद्यन्तर्गतास्तेभ्यः शैषिकोऽण्। यथा काराव्यस्येमे छात्राः काण्वाः। एवं वामरथादपि शैषिकोऽण् वामरथ्यस्य छात्रा वामरथाः। बहुवचने यञ्वण्योऽपि लुक्। वामरथाः। यजश्चेति ङीप्। वामरथी। इत्यादि स्वरस्त्वन्तोदात्त एव॥

### ५६—तिकादिभ्यः फिञ् ॥ अ० ॥ ४ ॥ १ । १५४ ॥

तिकादिप्रातिपदिकेभ्योऽपत्ये फिञ् प्रत्ययो भवति । तिकस्यापत्यं तैकायनिः । कैतवायनिः :—

तिक । कितव । संज्ञा । बाल। शिखा । उरस् । शाट्य । सैन्धव । यमुन्द। रूप्य । ग्राम्य । नील । असित । गोकच्य । कुरु । देवरथ । तैतिल । औरस । कौरव्य । भौरिकि । भौलिकि । चौपयत । चैटयत । शैकयत। चैतयत ध्वाजवत । चन्द्रमस् । शुभ । गङ्गा । वरेण्य । सुयामन् । आरद्ध । वह्यका । खल्य । वृष ( १ ) । लोमक । उदन्य । यज्ञ । ऋथ । भीत । जाजल । रस । लावक । ध्वजवद् । वसु । बन्धु । आवन्धका । सुपामन् ॥ इति तिकादयः ॥

### ५७—वाकिनादीनां कुक् च ॥ अ० ॥ ४ । १ । १५८ ॥

वाकिनादिशब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति । तत्सन्नियोगेन चैषां कुगागमः वाकिनस्यापत्यं वाकिनकायनिः :—

वाकिन । गारेध । कार्कट्य । काक । लङ्का ॥ चर्मिवर्मिणोर्नलोपश्च ( २ ) । इति वाकिनादयः ॥

### ५८—वा०-कम्बोजादिभ्यो लुग्वचनम् ॥ ४ । १ । १७५ ॥

कम्बोजादिशब्देभ्योऽपत्ये तद्राजनि विहितस्य लुग्भवति। कम्बोजस्यापत्यं तद्राजो वा कम्बोजः :—

कम्बोज । चोल । केरल । शक । यवन । इति कम्बोजादयः ॥

### ५९—न प्राच्यभर्गादियौधेयादिभ्यः ॥ अ० ॥ ४ । १ । १७८ ॥

प्राच्यक्षत्रियवाचकेभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चोत्पन्नस्य तद्राजप्रत्ययस्य लुङ् न भवति । अतश्चेति प्राप्तः प्रतिषिध्यते । प्राच्य । पञ्चालानां राज्ञी पाञ्चाली । वैदेही । भार्गी । यौधेयी :—

भर्ग । करूष । केकय । कश्मीर । साल्व । सुस्थाल । उरश । कौरव्य । इतिभर्गादयः ॥ यौधेय । शौभ्रेय । शौक्रेय । ग्रावाणेय । वार्त्तेय । धार्त्तेय । त्रिगर्त्त । भरत । उशीनर । इतियौधेयादयः ॥

---

( १ ) फिञ् प्रत्ययसम्बंधे वृषशब्दस्य यकारान्तत्वं महाभाष्ये कृतम् । वृषस्यापत्यं वार्ष्यायणिः ॥

( २ ) चार्मिकायणिः वार्मिकायणिः ॥

## ६०—भिक्षादिभ्योऽण् ॥ अ० ॥ ४ । २ । ३८ ॥

षष्ठी समर्थभिक्षादिशब्देभ्यः समूहार्थेऽण् प्रत्ययो भवति । अञादिबाधनार्थमण्ग्रहणम् । भिक्षाणां समूहो भैक्षम् । गार्भिणम् :—

भिक्षा । गर्भिणी । क्षेत्र । करीष । अंगार । चर्मिन् । धर्मिन् । चर्मन् । धर्मन् सहस्र । युवति । पदाति । पद्धति । अथर्वन् । अर्वन् । दक्षिणा । भूत । विषय । श्रोत्र ॥ वृक्षादिभ्यः खण्डः (१) ॥ वृक्षखण्डः । वृक्ष । तरु । पादप । इति भिक्षादयः ।

## ६१—खण्डिकादिभ्यश्च ॥ अ० ॥ ५ । २ । ४५ ॥

खण्डिकादिभ्यः समूहार्थेऽञ् प्रत्ययो भवति । खण्डिकानां समूहः खाण्डिकम् :—

खण्डिका । वडवा ॥ क्षुद्रकमालवात्सेनासंज्ञायाम् ॥ (२) भिक्षुक । शुक । उलूक । श्वन् । युग । अहन् । वरत्रा । हलबन्ध । इति खण्डिकादयः ॥

## ६२—पाशादिभ्यो यः ॥ अ० ॥ ४ । २ । ४९ ॥

षष्ठीसमर्थपाशादिभ्यः समूहार्थे यः प्रत्ययो भवति । पाशानां समूहः पाश्या रज्जुः । तृण्या :—

पाश । तृण । धूम । वात । अंगार । पोत । बालक । पिटक । पिटाक । शकट । हल । नड । वन । पाटलका । गल । इति पाशादयः ॥

## ६३—राजन्यादिभ्यो वुञ् ॥ अ० ॥ ४ । २ । ५३ ॥

राजन्यादिप्रातिपदिकेभ्यो विषयो देश इत्येतस्मिन्नर्थे वुञ् प्रत्ययो भवति । राजन्यानां विषयो देश, राजन्यकः :—

राजन्य । देवयान । शालङ्कायन । जालन्धरायण । आत्मकामेय । अम्बरीष पुत्र । वसाति । बैल्वान । शैलूष । उदुम्बर । बैल्ववल । आर्जुनायन । संप्रिय । दाक्षि । ऊर्णनाभ । आप्रीत । अनीड । वैतिल । बाभ्रक (३) । इति राजन्यादयः ॥

---

(१) खण्डशब्दः पुस्तकान्तरपठितो न सर्वत्र क्वचित्तु वृक्षादिभ्यः षण्डः । इतिपाठः । वृक्षषण्डः ॥

(२) क्षुद्राश्च मालवाश्चेति क्षत्रियद्वन्द्वः । ततः पूर्वेणैवाञिसिद्धे गोत्रवुञ् बाधनार्थं वचनम् । क्षुद्रकमालवानां समूहः क्षौद्रकमालवी सेना । सेनासंज्ञेतिनियमार्थम् । अन्यत्राञ् न भवति । क्षौद्रकमालवकम् ॥

(३) अयमाकृतिगणस्तेन मालवानां विषयो देशः, मालवकः । वैराटकः । त्रैगर्त्तकः । इत्यादयः शब्दाः सिद्धा भवन्ति ॥

## ६३—भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥ अ० ॥४।२।५४ ॥

विषयो देश इत्येतस्मिन् विषये षष्ठीसमर्थेभ्यो भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च यथासंख्यं विधल्भक्तलौ प्रत्ययौ भवतः। अणोऽपवादः। भौरिकीणां विषयो देशः, भौरिकिविधः। ऐषुकारिभक्तः॥

भौरिकि। भौलिकि। वैपेय। चैटयत। काणेय। वाणिजक। कालिज। वालिज्यक। शैकयत। वैकयत। इति भौरिक्यादयः॥ ऐषुकारि। सारस्यायन। चान्द्रायण। द्व्याक्षायण। त्र्यायण। औडायन। जौलायन। खाडायन। सौवीर। दासमित्रि। दासमित्रायण। शौद्रायण। दाक्षायण। शयण्ड। तार्क्ष्यायण। शौभ्रायण। सायण्डि। शौण्डि। वैश्वमाणव। वैश्वधेनव। नद। तुण्डदेव। अलायत। औलालायत। शौण्ड। शयाण्ड। वैश्वदेव॥ इत्यैषुकार्य्यादयः॥

## ६५—क्रतूक्थादिसूत्रान्ताट् ठक्॥ अ० ॥ ४ । २ । ६० ॥

तदधीते तद्वेदेत्यस्मिन् विषये क्रतुविशेषवाचिभ्य उक्थादिभ्यः सूत्रान्ताच्च प्रातिपदिकाट् ठक् प्रत्ययो भवति। अणोऽपवादः। अग्निष्टोममधीते वेद वा, आग्निष्टोमिकः। वाजपेयिकः। औक्थिकः। वार्त्तिकसूत्रमधीते, वार्त्तिकसूत्रिकः सांग्रहसूत्रिकः :—

उक्थ। लोकायत। न्याय। न्यास। निमित्त। पुनरुक्त। निरुक्त। यज्ञ। चर्चा। धर्म। क्रमेतर। श्लक्ष्ण। संहिता। पद। क्रम। संघात। वृत्ति। संग्रह। गुणागुण। आयुर्वेद॥ द्विपदी, ज्योतिषि (१)॥ अनुपद। अनुकल्प। अनुगुण। इत्युक्थादयः॥

## ६६—क्रमादिभ्यो वुन्॥ अ० ॥ ४ । २ । ६१ ॥

तदधीते तद्वेदेत्यर्थे क्रमादिभ्यो वुन् प्रत्ययो भवति। क्रममधीतेऽक्रमकः पदकः :—

क्रम। पद। शिक्षा। मीमांसा। सामन्। इति क्रमादयः॥

## ६७—वसन्तादिभ्यष्ठक्॥ अ० ॥ ४ । २ । ६३ ॥

तदधीते तद्वेदेत्यस्मिन् विषये वसन्तादिप्रातिपदिकेभ्यष्ठक् प्रत्ययो भवति। वसन्तसहचरितो ग्रन्थो वसन्तस्तमधीते वेद वा स वासन्तिकः। वार्षिकः। एवं सर्वत्र:—

वसन्त। वर्षा। शरद्। हेमन्त। शिशिर। प्रथम। गुण। चरम। अनुगुण। अपर्वन्। अथर्वन्॥ इतिवसन्तादयः॥

(१) द्विपदीं ज्योतिःशास्त्रमधीते जानाति वा स द्वैपदिकः॥

६८—संकलादिभ्यश्च ॥ अ० ॥ ४ । २ । ७५ ॥

संकलादिप्रातिपदिकेभ्यश्चातुर्थिकोऽञ् प्रत्ययो भवति । अणोऽपवादः । पुष्क
स्मिन् सन्तीति पौष्कलो देशः । सिकताया अदूरभवो ग्रामः सैकतः । यथा स
वमर्थसंबन्धः :—

संकल । पुष्कल । उद्दय । उडुप । उत्पुट । कुम्भ । विधान । सुदक्ष । सुद
सुभूत । सुनेत्र । सुपिङ्गल । सिकता । पूतीकी । पूलास । कूलास । पला
निवेश । गवेश । गम्भीर । इतर । शर्मन् । अहन् । लोमन् । वेमन् । वरुण । बहु
सद्योज । अभिषिक्त । गोभृत् । राजभृत् । गृह । भृत । भल्ल । माल । ( वृत् ) इ
संकलादयः ॥

६६—सुवास्त्वादिभ्योऽण् ॥ अ० ॥ ४ । २ । ७७ ॥

सुवास्त्वादिप्रातिपदिकेभ्यश्चातुरर्थिकोऽण् प्रत्ययो भवति । अञोऽपवादः । सु
स्तोरदूरं नगरं, सौवास्तवम् । सौवास्तवी । नदी :—

सुवास्तु । वर्णु । भण्डु । खण्डु । कण्डु । सेचालिन् । कर्पूरिन् । शिखण्डि
गर्त । कर्कश । शटीकर्ण । कृष्ण । कर्क । कर्कन्धूमती । गोह्य । गाह्वि । अहिसक्
( वृत् ) इति सुवास्त्वादयः ॥

७०—वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठको ऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्ण सुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ॥ अ० ॥ ४ । २ । ८० ॥

अरीहणादिसप्तदशगणस्थप्रातिपदिकेभ्यश्चातुरर्थिका वुञादयः सप्तदशैव प्रत्
यथासंख्येन भवन्ति । आदिशब्दः प्रत्येकमभिसंबध्यते । यथासम्भवमर्थसम्बन्
अरीहणादिभ्यो वुञ् । शिरीषाणामदूरभवो ग्रामः शैरीषकः । अरीहणानां निव
देश आरीहणकः :—

अरीहण । द्रुघण । खदिर । सार । भगल । उलन्द । सांपरायण । क्रौष्
यण । भास्त्रायण । मैत्रायण । त्रैगर्त्तायन । रायस्पोष । विपथ । उद्दण्ड । उदञ्
खाडायन । खण्ड । वीरण । काशकृत्स्न । जाम्बवन्त । शिंशपा । किरण । रैव
वैल्व । वैमतायन । मैमतायण । सौसायन । शाण्डिल्यायन । शिरीष । बधि
वैगर्त्तायण । गोमतायण । सौमतायण । खाण्डायण । विपाश । सुयज्ञ । जम्बु । सुश
इत्यरीहणादयः ॥ कृशाश्वादिभ्यश्छण् । कार्शाश्वीयः । अरिष्टेन निर्वृत्तमारिष्टीयम्

कृशाश्व । अरिष्ट । अरीश्व । वेश्मन् । विशाल । रोमक । शबल । कू
रोमन् । वर्वर । सुकर । सूकर । प्रतर । सदृश । पुरग । सुख । धूम । अजि

सिनता । वनिता । अवनत । विकुधास । अरुस् । अवयास । अयावस् । मौद्गलाय ।
इति काशाश्वादयः ॥ ऋश्यादिभ्यः कः ॥ न्यग्रोधानामदूरभवं वनं न्यग्रोधकम् :—

ऋश्य । न्यग्रोध । शिरा । निलीन । निवास । निधान । निवात । निबद्ध ।
विबद्ध । परिगूढ । उपगूढ । उत्तराश्मन् । स्थूलबाहु । खदिर । शर्करा । अनडुह् ।
परिवंश । वेणु । वीरण । खण्ड । परिवृत्त । कर्दम । अंशु । इति ऋश्यादयः ॥ कुमु-
दादिभ्यष्ठच् ॥ बल्वजाः सन्त्यस्मिन् स बल्वजिको देशः :—

कुमुद । शर्करा । न्यग्रोध । उत्कट । इत्कट । गर्त्त । बीज । अश्वत्थ । बल्वज । परिवाप ।
शिरीष । यवाष । कूप । विकङ्कत । कण्टक । कङ्कट । संकट । पलाश । तिक । कत ।
दशग्राम । इति कुमुदादयः ॥ काशादिभ्य इलः । काशाः सन्ति यत्र स काशिलो देशः :—

काश । वाश । अश्वत्थ । पलाश । पीयूष । विश । विस । तृण । नर । चरण ।
कर्दम । कर्पूर । कण्टक । गुह । आवास । नड । वन । बधूल । बर्बर । इति का-
शादयः ॥ तृणादिभ्यः शः ॥ तृणानि यत्र सन्ति स तृणशो देशः :—

तृण । नड । बुस । पर्ण । वर्ण । चरण । अर्ण । जन । बल । लव । वन ।
इति तृणादयः ॥ प्रेक्षादिभ्यः इनिः । प्रेक्षया निर्वृत्तः प्रेक्षी :—

प्रेक्षा । हलका । फलका । बन्धुका । ध्रुवका । क्षिपका । न्यग्रोध । इक्कट ।
बुधका । संकट । कूपका । कर्कटा । सुकटा । मङ्कट । सुक । महा । इति प्रेक्षादयः ॥
अश्मादिभ्योरः । अश्मना निर्वृत्तः, अश्मरः :—

अश्मन् । यूष । रूष । मीन । दर्भ । वृन्द । गुड । खण्ड । नग । शिखा । यूथ । रुष । नद । नख ।
काट । पाम । इत्यश्मादयः ॥ सख्यादिभ्यो ढञ् । सखायः सन्त्यत्र साखेयो देशः :—

सखि । सखिदत्त । वायुदत्त । गोहित । गोहिल । भल्ल । पाल । चक्रपाल ।
चक्रवाल । छगल । अशोक । करवीर । सीकर । सकर । सरस । समल । चर्क ।
चक्रपाल । उशीर । सुरस । रोह । तमाल । कदल । सप्तल । इति सख्यादयः ॥

संकाशादिभ्यो ण्यः । सांकाश्यम् । काम्पिल्यस्यादूरभवो ग्रामः काम्पिल्यः :—

संकाश । काम्पिल्य । समीर । कश्मर । शूरसेन । सुपथिन् । सक्थच । यूप ।
अंश । राग । अश्मन् । कूट । मलिन । तीर्थ । अगस्ति । विरत । चिकार । विरह ।
नासिका । इति संकाशादयः ॥ बलादिभ्यो यः प्रत्ययः । बलेन निर्वृत्तो बल्यः :—

बल । वुल । तुल । डल । डुल । कवल । वन । कुल । इति बलादयः ॥ पक्षा-
दिभ्यः फक् प्रत्ययः । पक्षेण निर्वृत्तः पाक्षायणः :—

पक्ष । तुष । अण्ड । कम्बलिक । चित्र । अश्मन् । अतिस्वन् ॥ पथिन्, पन्थच
(१) ॥ कुम्भ । सीरज । सीरक । सरक । सलक । सरस । समल । रोमन् ।

(१) पथोऽदूरभवं वनं पान्थायतनम् ॥

लोमन्। हंसका। लोमक। सकण्डक। अस्तिवल। यमल। हस्त। सिंहक। इति पक्षादयः॥ कर्णादिभ्यः फिञ् प्रत्ययः। कर्णस्य निवासः कार्णायनिः :—

कर्ण। वसिष्ठ। अलुश। शल। द्रुपद। अनडुह्य। पाञ्चजन्य। स्थिरा। कुलिश। कुम्भी। जीवन्ती। जित्व। आण्डीवत्। अर्क। लूष। स्फिक्। ग्रावत्। इतिकर्णादयः॥ सुतङ्गमादिभ्य इञ् प्रत्ययो भवति। सुतङ्गमेन निर्वृत्तः सौतङ्गमिः

सुतङ्गम। मुनिचित्त। विप्रचित्त। महापुत्र। श्वेत। गडिक। शुक्र। विग्र। बीजवापिन्। श्वन्। अर्जुन। अजिर। जीव। इति सुतङ्गमादयः॥ प्रगदिन्नादिभ्यो ञ्यः प्रत्ययो भवति। प्रगदिनो यत्र सन्ति स प्रागद्यो देशः :—

प्रगदिन्। मगदिन्। शरदिन्। कलिव। खडिव। गडिव। चूडार। मार्जार कोविदार॥ इति प्रगदिन्नादयः॥ वराहादिभ्यः कक् प्रत्ययः। वराहाः सन्ति-यत्र स वाराहको देशः। पालाशकः :—

वराह। पलाश। शिरीष। पिनद्ध। स्थूण। विदग्ध। विदग्ध। विभग्न। बाहु। खदिर। शर्करा। विनद्ध। निबद्ध। विरुद्ध। मूल। इतिवराहादयः॥ कुमुदादिभ्यष्ठक् प्रत्ययो भवति। कुमुदाः सन्ति यस्मिन् देशे स कौमुदिको देशः :—

कुमुद। गोमथ। रथकार। दशग्राम। अश्वत्थ। शाल्मली। कुण्डल। मुनिस्थूल। कूट। मुचुकर्ण। कुन्द। मधुकर्ण। शुचिकर्ण। शिरीष। इति कुमुदादयः॥

## ७१—वरणादिभ्यश्च॥ अ०॥ ४। २। ८२॥

वरणादिप्रातिपदिकेभ्य उत्पन्नस्य चातुरर्थिकप्रत्ययस्य लुब् भवति वरणानाम-दूरभवं नगरं वरणाः :—

वरणाः। पूर्वेगोदौ। पूर्वेणगोदौ। अपरेणगोदौ। आलिङ्ग्यायन। पर्णी। शृङ्गी। शल्मलयः। सदाण्वी। वणिकि। वणिक्। जालपद। मथुरा। उज्जयिनी। गया। तक्षशिला। उरशा। आकृत्या (१)। इति वरणादयः॥

## ७२—मध्वादिभ्यश्च॥ अ०॥ ४। २। ८६॥

मध्वादिशब्देभ्यश्चातुरर्थिको मतुप् प्रत्ययो भवति। मध्वस्मिन्नस्तीतिमधुमान् :—

मधु। विस। स्थाणु। मुष्टि। हृष्टि। इक्षु। वेणु। रम्य। ऋक्ष। कर्कन्धु। शमी। किरीर। हिम। किशरा। शर्पणा। मरुत्। मरुव। दार्वाघाट। शर। इष्टका। तक्षशि-ला। शक्ति। आसन्दी। आसुति। शलाका। आमिधी। खडा। वेटा। इति मध्वादयः॥

(१) अत्र सूत्रस्थचकारेणाकृतिगणत्वं बुध्यते। तेन कटुकवदर्या अदूरभवो ग्रामः कटुकबदरी। शिरीषाः। काञ्ची इत्यादिषु लुप् सिद्धो भवति॥

## ७३—उत्करादिभ्यश्छः ॥ अ० ॥ ४ । २ । ९० ॥

उत्करादिप्रातिपदिकेभ्यश्चातुरर्थिकश्छः प्रत्ययो भवति । यथासंभवमर्थसंबन्धः। अर्काणामदूरभवो ग्रामः, अर्कीयः :—

उत्कर । संफल । संकर । शफर । पिप्पल । पिप्पलीमूल । अश्मन् । अर्क । पर्ण । सुपर्ण । खलाजिन । इडा । अग्नि । तिक । कितव । आतप । अनेक । पलाश । तृणव । पिचुक । अश्वत्थ । शकाक्षुद्र । भस्त्रा । विशाला । अवरोहित । गर्त्त । शाल । अन्य । जन्या । अजिन । मञ्च । चर्मन् । उत्क्रोश । शान्त । खदिर । शूर्पणाय । श्यावनाय । नैव । बक । नितान्त । वृक्ष । इन्द्रवृक्ष । आर्द्रवृक्ष । अर्जुनवृक्ष । इत्युत्करादयः ॥

## ७४—नडादीनां कुक् च ॥ अ० ॥ ४ । २ । ९१ ॥

नडादिप्रातिपदिकेभ्यश्चातुरर्थिकश्छः प्रत्ययो भवति तस्मिन् सति कुगागमश्च। यथासंभवमर्थसंबंधः । नडाः सन्ति यत्र तन्नडकीयं वनम् :—

नड । प्लक्ष । बिल्व । वेणु । वेत्र । वेतस । तृण । इक्षु । काष्ठ । कपोत । क्रुञ्चाया ह्रस्वत्वं च (१) ॥ तक्षन्नलोपश्च ॥ इति नडादयः ॥

## ७५—कत्त्र्यादिभ्यो ढकञ् ॥ अ० ॥ ४ । २ । ९५ ॥

कत्त्र्यादिशब्देभ्यः शैषिके ढकञ् प्रत्ययो भवति । कत्त्र्यां भवः कात्त्रेयकः :—

कत्त्रि । उम्भि । पुष्कर । पुष्कल । मोदन । कुम्भी । कुण्डिन । नगर । वञ्जी । भक्ति । माहिष्मती । चर्मण्वती । वर्मती । ग्राम । उख्या । कुल्याया यलोपश्च (२)॥ इति कत्त्र्यादयः ॥

## ७६—नद्यादिभ्यो ढक् ॥ अ० ॥ ४ । २ । ९७ ॥

नद्यादिभ्यः प्रातिपदिकेभ्यः शैषिको ढक् प्रत्ययो भवति । नद्यां भवं नादेयम् :—

नदी । मही । वाराणसी । श्रावस्ती । कौशाम्बी । नवकौशाम्बी । काशफरी । खादिरी । पूर्वनगरी (३) । पावा । मावा । साल्वा । दार्वा । दाल्वा । वासेनकी । वडवाया वृषे ॥ इति नद्यादयः ॥

---

(१) क्रुञ्चाः सन्त्यस्मिन् तत् क्रुञ्चकीयं वनम् । तक्षकीयो ग्रामः ॥

(२) कुल्यां भवः कौलेयकः । यकारलोपः ॥

(३) पूर्वनगर्यां भवः पौर्वनगरेयः । अत्र—पूः । वन । गिरि । इतिपाठान्तरम् । तदा—पौरेयम् । वानेयम् । गैरेयमिति विभक्तं रूपत्रयं सिध्यति ॥

## ७७—प्रस्थोत्तरपदपलद्यादिकोपधादण् ॥ अ० ॥ ४ ।२।११० ॥

प्रस्थोत्तरपदात् पलद्यादिभ्यः कोपधाच्च प्रातिपदिकादण् प्रत्ययो भवति शैषिकः। मद्रीप्रस्थे भवो माद्रीप्रस्थः । माहकीप्रस्थः । पलद्यां भवः पालदः । पारिषदः । कोपधात् । नैलीनकः । :–

पलदी । परिषत् । यकृल्लोमन् । रोमक । कालकूट । पटच्चर । वाहीक । कलकीट । मलकीट । कमलकीट । कमलभिदा । कमलकीर । बाहुकीट । नैतकी । परिखा । शूरसेन । गोमती । उदपान । पद्म । कललकीट । कललकीकटा । गोष्ठी । नैधिकी । नैकेती । सकृल्लोमन् । इति पलद्यादयः ॥

## ७८–कण्वादिभ्यो गोत्रे ॥ अ० ॥ ४ । २ । १११ ॥

गोत्रप्रत्ययान्तकण्वादिप्रातिपदिकेभ्यः शैषिकोऽण् प्रत्ययो भवति । काण्वस्येमे काण्वाश्छात्राः । गर्गाद्यन्तर्गताः कण्वादयः । अतएवात्र न लिख्यन्ते ॥

## ७९—काश्यादिभ्यष्ठञ्ञिठौ ॥ अ० ॥ ४ । २ । ११६ ॥

काश्यादिप्रातिपदिकेभ्यः शैषिकौ ठञ्ञिठौ प्रत्ययौ भवतः । प्रत्यययोर्ञकार विपर्ययभेदात् स्त्रीप्रत्यये विशेषः । ठञन्तान् ङीप् ञिठान्तात् तु टाबेव भवति । काश्यां भवः काशिकः । काशिकी । काशिका :—

काशि । चेदि । वैदि । संज्ञा । संवाह । अच्युत । मोहमान । शकुलाद । हस्तिकर्षू । कुदामन् । कुनामन् । हिरण्य । करण । गोधाशन । भौरिकि । भौलिङ्गि । अरिन्दम । सर्वमित्र । देवदत्त । साधुमित्र । दासमित्र । दासग्राम । सौधावतान । युवराज । उपराज । सिन्धुमित्र । देवराज । आपदादिपूर्वपदान्तात् कालान्तात् ॥ आपत्कालिकी । आपत्कालिका । और्ध्वकालिकी । और्ध्वकालिका । तात्कालिकी । तात्कालिका । इति काश्यादयः ॥

## ८०—धूमादिभ्यश्च ॥ अ० ॥ ४ । २ । १२७ ॥

देशवाचिभ्यो धूमादिप्रातिपदिकेभ्यः शैषिको वुञ् प्रत्ययो भवति । अणोऽपवादः धूमे भवो धौमकः :–

धूम । खण्ड । खडण्ड । शशादन । आर्जुनाद । दाण्डायनस्थली । माहकस्थली घोषस्थली । माषस्थली । राजस्थली । राजगृह । सत्रासाह । भक्षास्थली । मद्रकूल गर्त्तकूल । आञ्जीकूल । द्व्याहाव । त्र्याहाव । संहीय । वर्बर । वर्चगर्त्त । विदेह। आनर्त्त । माठर । पाथेय । घोष । शिष्य । मित्र । वल । आराज्ञी । धार्त्तराज्ञी ।

अवयात । तीर्थ । कूलात्सौवीरेषु ॥ समुद्रान्नावि मनुष्ये च (१) ॥ कुक्षि । अन्तरीप । द्वीप । अरुण । उज्जयिनी । दक्षिणापथ । साकेत । मानवल्ली । वल्ली । सुराष्ट्री । इति धूमादयः ॥

## ८१—कच्छादिभ्यश्च ॥ अ० ॥ ४ । २ । १३३ ॥

कच्छादिदेशवाचिप्रातिपदिकेभ्यः शैषिकोऽण् प्रत्ययो भवति । वुञादेरपवादः । कच्छे भवः काच्छः :—

कच्छ । सिन्धु । वर्णु । गन्धार । मधुमत् । कम्बोज । कश्मीर । साल्व । कुरु । रङ्कु । अणु । अण्ड । खण्ड । द्वीप । अनूप । अजवाह । विजापक । कुलून । इति कच्छादयः ॥

## ८२—गहादिभ्यश्च ॥ अ० ॥ ४ । २ । १३८ ॥

गहादिप्रातिपदिकेभ्यः शैषिकश्छः प्रत्ययो भवति अणञोरपवादः । अन्तःस्थे भव अन्तःस्थीयः :—

गह । अन्तःस्थ । सम । विषम । मध्यमध्यमं चाण् चरणे (२) उत्तम । अङ्ग । वङ्ग । मगध । पूर्वपक्ष । अपरपक्ष । अधमशाख । उत्तमशाख । समानशाख । एकग्राम । एकवृक्ष । एकपलाश । इष्वग्र । इष्वनीक । अवस्यन्दी । अवस्कन्द । कामप्रस्थ । खाडायनि । खाण्डायनी । काविरणि । कामवेरणि । शैशिरि । शौङ्गि । आसुरि । आहिंसि । आमित्रि । व्याडि । वैदजि । भौजि । आढ्यश्वि । आनृशंसि । सौवि । पारकि । अग्निशर्मन् । देवशर्मन् । श्रौति । आरटकि । वाल्मीकि । क्षेमवृद्धिन् । उत्तर । अन्तर ॥ मुखपार्श्वतसोर्लोपः ॥ जनपरयोः कुक् च ॥ देवस्य च ॥ वेणुकादिभ्यश्छण् (३) ॥ इति गहादयः ॥

---

(१) समुद्रशब्दान्नावि मनुष्ये च वाच्ये वुञ् । समुद्रे भवा सामुद्रिका नौः । सामुद्रको मनुष्यः । अन्यत्र सामुद्रं जलम् ॥

(२) अस्यैव सूत्रस्य शेषवार्त्तिकप्रमाणेन पृथिवीमध्यशब्दस्य मध्यमादेशश्चरणेऽभिधेये निवासलक्षणोऽण् प्रत्ययः । अन्यत्र तु छ एव । पृथिवीमध्येनिवास एषां ते माध्यमाश्चरणाः । चरणादन्यत्र । मध्ये भवो मध्यमीयः ॥

(३) मुखपार्श्वयोस्तसन्तयोरन्त्यलोपः । मुखतोभवं मुखतीयम् । पार्श्वतीयम् । जने भवो जनकीयः । परकीयः । देवो भक्तिरस्य देवकीयः । वेणुकादिराकृतिगणः । वेणुकदेशे भवो वैणुकीयः । वैरेणकीयः । पालाशकीयः ॥

## ८३—सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥ अ० ॥ ४ । ३ । १६ ॥

सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवाचिभ्यः प्रातिपदिकेभ्यः शैषिकोऽण् प्रत्ययो भवति । ठञोऽपवादः । अण्ग्रहणं वृद्धाच्छस्य बाधनार्थम् । सन्धिवेलायां जातः सान्धिवेलः । ग्रैष्मः । तैषः । पौषः :—

सन्धिवेला । सन्ध्या । अमावास्या । त्रयोदशी । चतुर्दशी । पंचदशी । पौर्णमासी । प्रतिपत् ॥ संवत्सरात् फलपर्वणोः ॥ सांवत्सरं फलम् । सांवत्सरं पर्व ॥ इति सन्धिवेलादयः ॥

## ८४—दिगादिभ्यो यत् ॥ अ० ॥ ४ । ३ । ५४ ॥

सप्तमीसमर्थदिगादिप्रातिपदिकेभ्यो भवार्थे यत् प्रत्ययो भवति । अणश्छस्य चापवादः । दिशि भवं दिश्यम् :—

दिश । वर्ग । पूग । गण । पक्ष । धाय्या । मित्र । मेधा । अन्तर । पथिन् । रहस् । अलीक । उखा । साक्षिन् । आदि । अन्त । मुख । जघन (१) । मेघ । यूथ । उदकात्संज्ञायाम् (२) न्याय । वंश । अनुवंश । विश । काल । अप् । आकाश । इति दिगादयः ॥

## ८५—वा०—ड्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् ॥४।३।५९॥

अव्ययीभावसंज्ञकेभ्यः परिमुखादिप्रातिपदिकेभ्यो ड्यप्रत्ययो भवति । नियमार्थं वार्त्तिकमिदम् । सूत्रेण सामान्याव्ययीभावाद् ड्यः प्राप्तो नियम्यते । परिमुखं भवं पारिमुख्यम् । पारिहनव्यम् । नियमादिह न भवति । उपकूलं भवमौपकूलम् :—

परिमुख । परिहनु । पर्योष्ठ । पर्युलू । औपमूल । खल । परिसीर । अनुसीर । उपसीर । उपस्थल । उपकलाप । अनुपथ । अनुखड्ग । अनुतिल । अनुशीत । अनुमाष । अनुयव । अनुयूप । अनुवंश । अनुखड्ग । इति परिमुखादयः ॥

## ८६—वा०—अध्यात्मादिभ्यश्च ॥ ४ । ३ । ६० ॥

अध्यात्मादिभ्यो भवार्थे ठञ् प्रत्ययो भवति । अध्यात्मं भवमाध्यात्मिकम् :—

अध्यात्म । अधिदेव । अधिभूत । आकृतिगणोऽयम् । इत्यध्यात्मादयः ॥

---

(१) मुखजघनशब्दाभ्यां शरीरावयवत्वादेव यति सिद्धे पुनरत्र दिगादिषु पाठोऽशरीरावयवार्थः । सेनामुखे भवः सेनामुख्यम् । सेनाजघन्यम् । सेनाया अग्रपश्चाद्भागौ गृह्येते । तदन्तविधिना यत् ॥

(२) उदके भवा उदक्या रजस्वला । संज्ञाग्रहणादिह न भवति । उदके भव औदको मत्स्यः ॥

## ८७—अण् ऋगयनादिभ्यः ॥ अ० ॥ ४ । ३ । ७३ ॥

षष्ठीसप्तमीसमर्थेभ्य ऋगयनादिप्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोरण् प्रत्ययो भवति । ऋगयने भवमार्गयनः । तस्य व्याख्यानो वा । अण्ग्रहणं बाधकबाधनार्थम् वास्तुविद्याया व्याख्यानो ग्रन्थो वास्तुविद्यः । अत्र छ प्रत्ययो माभूत् :–

ऋगयन । पदव्याख्यान । छन्दोमान । छन्दोभाषा । छन्दोविचिति । न्याय । पुनरुक्त । व्याकरण । निगम । वास्तुविद्या । अङ्गविद्या । क्षत्रविद्या । उत्पात । उत्पाद । संवत्सर । मुहूर्त्त । निमित्त । उपनिषद् । शिक्षा । छन्दोविजिनी । व्याय । निरुक्त । विद्या । उद्याव । भिक्षा । इति, ऋगयनादयः ॥

## ८८—शुण्डिकादिभ्योऽण् ॥ अ० ॥ ४ । ३ । ७६ ॥

पंचमीसमर्थशुण्डिकादिप्रातिपदिकेभ्य आगतार्थेऽण् प्रत्ययो भवति । शुण्डिकादागतः शौण्डिकः :–

शुण्डिक । कृकण । स्थण्डिल । उदपान । उपल । तीर्थ । भूमि । तृण । पर्ण । इति शुण्डिकादयः ॥

## ८९—शण्डिकादिभ्यो ञ्यः ॥ अ० ॥ ४ । ३ । ९२ ॥

प्रथमासमर्थशण्डिकादिप्रातिपदिकेभ्योऽभिजन ऽभिधेये ञ्यः प्रत्ययो भवति शण्डिकोऽभिजनोऽस्य स शाण्डिक्यः :–

शण्डिक । सर्वकेश । सर्वसेन । शक । सट । रक । शङ्ख । बोध । इति शण्डिकादयः ॥

## ९०–सिन्धुतक्षशिलादिभ्योऽणञौ ॥ अ० ॥ ४ । ३ । ९३ ॥

प्रथमासमानाधिकरणेभ्यः सिन्ध्वादिभ्यस्तक्षशिलादिभ्यश्चाभिजनेऽर्थे यथासंख्यमणञौ प्रत्ययौ भवतः । सिन्धुरभिजनोऽस्य स सैन्धवः । तक्षशिलाऽभिजनोऽस्य स ताक्षशिलः । प्रत्ययभेदः स्वरभेदार्थः :—

सिन्धु । वर्णु । गन्धार । मधुमत् । कम्बोज । कश्मीर । साल्व । किष्किन्धा । गब्दिका । उरस । दरत् । कुलून । दिरसा । इति सिन्ध्वादयः ॥

तक्षशिला । वत्सोद्धरण । कौमेदुर । काण्डवारण । ग्रामणी । सरालक । कंस । किन्नर । संकुचित । सिंहकोष्ठ । कर्णकोष्ठ । बर्बर । अवसान । इतितक्षशिलादयः ॥

## ९१—शौनकादिभ्यश्छन्दसि ॥ अ० ॥ ४ । ३ । १०६ ॥

तृतीयासमर्थशौनकादिप्रातिपदिकेभ्यश्छन्दसि वेदे प्रोक्तार्थे णिनिः प्रत्ययो भवति । छाणोरपवादः । शौनकेन प्रोक्तमधीयते, शौनकिनः । वाजसनेयिनः । छन्दसीति किम् । शौनकीया शिक्षा । अत्र छन्द एव भवति :–

शौनक । वाजसनेय । साङ्गरव । शाङ्गरव । सापेय । शाखेय । खाडायन । स्कन्द । स्कम्ब । देवदत्तशठ । रज्जुकण्ठ । रज्जुभार । कठशाठ । कशाय । तलवकार । पुरुषासक । अश्वपेय । स्कम्भ । इति शौनकादयः ॥

## ९२—कुलालादिभ्यो वुञ् ॥ अ० ॥ ४ । ३ । ११८ ॥

तृतीयासमर्थकुलालादिप्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति । कृतमित्येतस्मिन्नर्थे संज्ञायां गम्यमानायाम् । कुलालेन कृतं कौलालकम् । वारुडकम् :–

कुलाल । वरुड । चण्डाल । निषाद । कर्मार । सेना । सिरिध्र । सेन्द्रिय । देवराज । परिषत् । वधू । रुरु । ध्रुव । रुद्र । अनडुह् । ब्रह्मन् । कुम्भकार । श्वपाक । इति कुलालादयः ॥

## ९३—बिल्वादिभ्योऽण् ॥ अ० ॥ ४ । ३ । ११६ ॥

षष्ठीसमर्थबिल्वादिप्रातिपदिकेभ्यो विकारावयवयोरर्थयोरण् प्रत्ययो भवति बिल्वस्य विकारोऽवयवो वा बैल्वः :–

बिल्व । व्रीहि । काण्ड । मुद्ग । मसूर । गोधूम । इक्षु । वेणु । गवेधुका (१) कर्पासी । पाटली । कर्कन्धू । कुटीर ॥ इति बिल्वादयः ॥

## ९४—पलाशादिभ्यो वा ॥ अ० ॥ ४ । ३ । १४१ ॥

पलाशादिप्रातिपदिकेभ्यो विकारावयवयोरञ् प्रत्ययो भवति । पलाशस्य विकारः पालाशम् । खादिरम् :–

पलाश । खदिर । शिंशपा । स्यन्दन । करीर । शिरीष । यवास । विकङ्कत । इति पलाशादयः ॥

## ९५—नित्यं वृद्धशरादिभ्यः ॥ अ० ॥ ४ । ३ । १४४ ॥

वृद्धेभ्यः शरादिभ्यश्च प्रातिपदिकेभ्यो भक्ष्याच्छादनयोर्विकारावयवयोर्भाषायां विषये नित्यं मयट् प्रत्ययो भवति । वृद्ध-आम्रमयम् । शालमयम् । शरमयम् । दर्भमयम् :–

शर । दर्भ । मृत् । कुटी । तृण । सोम । बल्वज । इति शरादयः ॥

---

(१) अस्मात्कोपधाच्चेत्यणि सिद्धे पुनःपाठो मयड्बाधनार्थः एतस्मिन् पक्षेऽपि मयण् माभूदिति ॥

## ९६—तालादिभ्योऽण् ॥ अ० ॥ ४ । ३ । १५२ ॥

तालादिप्रातिपदिकेभ्यो विकारावयवयोरण् प्रत्ययो भवति । तालस्य विकारः तालं धनुः । अन्यत्र तालमयम् । वृद्धत्वान्मयट् :—

तालाद्धनुषि । बार्हिण । इन्द्रालिश । इन्द्रादृश । इन्द्रायुध । चाप । श्यामाक । पीयुक्षा ॥ इति तालादयः ॥

## ९७—प्राणिरजतादिभ्योऽञ् ॥ अ० ॥ ४ । ३ । १५४ ॥

प्राणिवाचिभ्यो रजतादिभ्यश्च प्रातिपदिकेभ्यो विकारावयवयोरञ् प्रत्ययो भवति । कापोतस्य विकारः कापोतम् । राजतम् :—

रजत । सीस । लोह । उदुम्बर । नीच । नील । दारु । रोहितक । बिभीतक । कपीत । दारु । तीव्रदारु । त्रिकण्टक । कण्टकार । इति रजतादयः ॥

## ९८—प्लक्षादिभ्योऽण् ॥ अ० ॥ ४ । ३ । १६४ ॥

प्लक्षादिप्रातिपदिकेभ्यो विकारावयवत्वेन विवक्षिते फलेऽभिधेयेऽण् प्रत्ययो भवति । प्लक्षस्य विकारः प्लाक्षम् नैयग्रोधम् :—

प्लक्ष । न्यग्रोध । अश्वत्थ । इङ्गुदी । शिग्रु । कर्कन्धु । कर्कन्तु । ऋक्रतु । बृहती । काक्ष । तुरुरु ॥ इति प्लक्षादयः ॥

## ९९—हरीतक्यादिभ्यश्च ॥ अ० ॥ ४ । ३ । १६७ ॥

हरीतक्यादिप्रातिपदिकेभ्यः फलेऽभिधेये प्रत्ययस्य लुब् भवति । लुकि प्राप्ते लुपो विधानं युक्तवद्भावार्थम् । हरीतक्याः फलं हरीतकी । हरीतक्याः फलानि हरीतक्यः ( १ ) :—

हरीतकी । कोशातकी । नखरजनी । नखररजनी । शष्कण्डी । शाकण्डी । दाडी । दोडी । दडी । श्वेतपाकी । अर्जुनपाकी । काला । द्राक्षा । ध्वाङ्क्षा । गर्गरिका । कण्टकारिका । शेफालिका ॥ इति हरीतक्यादयः ॥

## १००—पर्पादिभ्यः ष्ठन् ॥ अ० ॥ ४ । ४ । १० ॥

पर्पादिभ्यश्चरतीत्यर्थे ष्ठन् प्रत्ययो भवति । षकारो ङीषर्थः । पर्पेण चरति, पर्पिकः । पर्पिकी :—

पर्प । अश्व । अश्वत्थ । रथ । जाल । न्यास । व्याल ॥ पादः पच्च ॥ पदिकः ॥ इति पर्पादयः ॥

---

( १ ) हरीतक्यादिषु व्यक्तिर्भवति युक्तवद्भावेनेति वार्त्तिकेन लिङ्गस्यैवयुक्तवद्भावो न तु वचनस्य ॥

## १०१—वेतनादिभ्यो जीवति ॥ अ० ॥ ४ । ४ । १२ ॥

तृतीयासमर्थवेतनादिप्रातिपदिकेभ्यो जीवतीत्यर्थे ठक् प्रत्ययो भवति । वेतनेन जीवति, वैतनिकः :-

वेतन । वाह । अर्द्धवाह । धनुर्दण्ड (१) । जाल । वेस । उपवेस । प्रेषण । उपस्ति । सुख । शय्या । शक्ति । उपनिषत् । उपवेष । स्रक् । पाद । उपस्थान । इति वेतनादयः ॥

## १०२—हरत्युत्सङ्गादिभ्यः ॥ अ० ॥ ४ । ४ । १५ ॥

तृतीयासमर्थोत्सङ्गादिप्रातिपदिकेभ्यो हरतीत्यर्थे ठक् प्रत्ययो भवति । उत्सङ्गेन हरति, औत्सुङ्गिकः :-

उत्सङ्ग । उडुप । उत्पत । पिटक । उडप । पिटाक । इत्युत्सङ्गादयः ॥

## १०३—भस्त्रादिभ्यः ष्ठन् ॥ अ० ॥ ४ । ४ । १६ ॥

भस्त्रादितृतीयासमर्थप्रातिपदिकेभ्यो हरतीत्यर्थे ष्ठन् प्रत्ययो भवति । भस्त्रया हरति, भस्त्रिकः । भस्त्रिकी :-

भस्त्रा । भरट । भरण । भारण । शीर्षभार । शीर्षेभार । अंसभार । अंसेभार । इति भस्त्रादयः ॥

## १०४—निर्वृत्तेऽक्षद्यूतादिभ्यः ॥ अ० ॥ ४ । ४ । १९ ॥

अक्षद्यूतादितृतीयासमर्थप्रातिपदिकेभ्यो निर्वृत्तेऽर्थे ठक् प्रत्ययो भवति । अक्षद्यूतेन निर्वृत्तम्, आक्षद्यूतिकं वैरम् :-

अक्षद्यूत । जानुप्रहृत । जङ्घाप्रहृत । पादस्वेदन । कण्टकमर्दन । गतागत । यातोपयात । अनुगत । इत्यक्षद्यूतादयः ॥

## १०५—अण् महिष्यादिभ्यः ॥ अ० ॥ ४ । ४ । ४८ ॥

षष्ठीसमर्थमहिष्यादिप्रातिपदिकेभ्यो धर्म्यमित्यर्थेऽण् प्रत्ययो भवति । महिष्या धर्म्यं माहिषम् :-

महिषी । प्रजावती । प्रलेपिका । विलेपिका । अनुलेपिका । पुरोहित । मणिपाली । अनुचारक । होतृ । यजमान । इति महिष्यादयः ॥

---

(१) अत्र संघातविगृहीतयोर्ग्रहणं भवति । धनुर्दण्डेन जीवति धानुर्दण्डिकः । धनुषा जीवति धानुष्कः । दाण्डिकः ॥

## १०६—किशरादिभ्यः ष्ठन् ॥ अ० ॥ ४ । ४ । ५३ ॥

प्रथमासमानाधिकरणकिशरादिप्रातिपदिकेभ्यः पण्यमित्यर्थे ष्ठन् प्रत्ययो भवति। गन्धविशेषवाचकाः किशरादयः। किशराः पण्यमस्य, किशरिकः। किशरिकी :—

किशर। नरद। नलद। सुमङ्गल। तगर। गुग्गुल। उशीर। हरिद्रा। हरिद्रायणी ॥ इति किशरादयः॥

## १०७—छत्रादिभ्यो णः ॥ अ० ॥ ४ । ४ । ६२॥

प्रथमासमानाधिकरणछत्रादिप्रातिपदिकेभ्यः शीलमित्यर्थे णः प्रत्ययो भवति। इव शब्दस्यात्र लोपो द्रष्टव्यः। छत्रमिव शीलमस्य सछात्रः शिष्यः। छत्रवद्गुरुरक्षकः :—

छत्र। बुभुक्षा। शिक्षा। पुरोह। स्था (१)। चुरा। उपस्थान। ऋषि। कर्मन्। विश्वधा। तपस्। सत्य। अनृत। शिबिका। इति छत्रादयः ॥

## १०८—प्रतिजनादिभ्यः खञ् ॥ अ० ॥ ४ । ४ । ६६ ॥

सप्तमीसमर्थप्रतिजनादिप्रातिपदिकेभ्यः साधुरित्यस्मिन्नर्थे खञ् प्रत्ययो भवति। प्रतिजने साधुः, प्रातिजनीनः। जने जने साधुरित्यर्थः :—

प्रतिजन। इदंयुग। संयुग। समयुग। परयुग। परकुल। परस्य कुल। अमुष्यकुल। सर्वजन। विश्वजन। पञ्चजन। महाजन। इति प्रतिजनादयः ॥

## १०९—कथादिभ्यष्ठक् ॥ अ० ॥ ४ । ४ । १०२ ॥

सप्तमीसमर्थकथादिप्रातिपदिकेभ्यः साधुरित्यर्थे ठक् प्रत्ययो भवति। कथायां साधुः काथिकः :—

कथा। विकथा। वितण्डा। कुष्टचित्। जनवाद। जनेवाद। वृत्ति। सद्गृह। गुण। गण। आयुर्वेद। इति कथादयः ॥

## ११०—गुडादिभ्यष्ठञ् ॥ अ० ॥ ४ । ४ । १०३ ॥

सप्तमीसमर्थगुडादिप्रातिपदिकेभ्यः साधुरित्यर्थे ठञ् प्रत्ययो भवति। गुडे साधुः, गौडिक इक्षुः :—

गुड। कुल्माष। सक्तु। अपूप। मांसौदन। इक्षु। वेणु। संग्राम। संघात। प्रवास। निवास। उपवास। इति गुडादयः ॥

---

(१) अत्र स्थग्रहणेन सोपसर्गस्य ग्रहणमिष्यते। आस्था शीलमस्य स, आस्थः। संस्थः। आवस्थः ॥

**१११—उगवादिभ्यो यत् ॥ अ० ॥ ५ । १ । २ ॥**

उवर्णान्ताद् गवादिभ्यश्च प्रातिपदिकेभ्यः प्राक्क्रीतीयेष्वर्थेषु यत् प्रत्ययो भवति। ङ्कवे हितं शाङ्कव्यम् दारु । गवे हितं गव्यम् :—

गो । हविस् । बर्हिस् । खट । अष्टका । युग । मेधा । स्रक् ॥ नाभि नभं च ॥ ः संप्रसारणं वा च दीर्घत्वं तत्सन्नियोगेन चान्तोदात्तत्वम् (१) ॥ शुन्यम् । शून्यम्॥ सोऽनङ् च ॥ ऊधन्यः । कूपः । उदर । खर । खद । अक्षर । विष । स्कन्द । वा । इति गवादयः ॥

**११२—विभाषा हविरपूपादिभ्यः ॥ अ० ॥ ५ । १ । ४ ॥**

हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्रातिपदिकेभ्यः प्राक्क्रीतीयेष्वर्थेषु विभाषा यत् यो भवति। पक्षे छः । पुरोडाशाय हिताः पुरोडाश्याः पुरोडाशीया वा तण्डुलाः। पूपेभ्यो हितं, अपूप्यम् । अपूपीयम् :—

अपूय । तण्डुल । अभ्यूष । अभ्योष । पृथुक । अभ्येष । अर्गल । मुसल । सूप। ष्टक । कर्णवेष्टक । किण्व ॥ अन्नविकारेभ्यश्च ( २ ) ॥ यूप । स्थूणा । पीप । अश्व। । कट । अयःस्थूण । ओदन । अवीष । प्रदीप । इत्यपूपादयः ॥

**११३—असमासे निष्कादिभ्यः ॥ अ० ॥ ५ । १ । २० ॥**

असमस्तेभ्यो निष्कादिप्रातिपदिकेभ्य आर्हीयेष्वर्थेषु ठक् प्रत्ययो भवति। निष्कं रिमाणमस्य नैष्किकम्। असमासे किम्। परमनैष्किकम् । अत्र ठञ्स्वरभेदः :—

निष्क । पण । पाद । माष । वाहद्रोण । षष्टि । इति निष्कादयः ॥

**११४—गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ॥ अ० ॥ ५ । १ । ३९ ॥**

संख्यापरिमाणाश्वादिविवर्जिताद् गोशब्दाद् द्व्यचश्च प्रातिपदिकाद्यत् प्रत्ययो ति । तस्य निमित्तं संयोगोत्पाताविल्यर्थे । गोर्निमित्तं संयोग उत्पातो वा गव्यः। च्–धनस्य निमित्तं संयोग उत्पातो वा । धन्यम् । स्वर्ग्यम्। यशस्यम् । आयुष्यम्। ख्या– पञ्चानां निमित्तं पञ्चकम् । परिमाण–प्रास्थिकम् । अश्वादिः–आश्विकम्। त्र यत् न भवति :—

अश्व । अश्मन् । गण । ऊर्णा । उमा । वसु । वर्ष । भङ्ग । इत्यश्वादयः ॥

---

( १ ) नाभये हितो नभ्योऽक्षः । नभ्यमञ्जनम् । यस्तु शरीरावयववाची नाभि स्ततः शरीरावयवादिति यति कृते नाभये हितं नाभ्यम् तैलमिति भवति । कारस्यानुक्तसमुच्चयार्थत्वान्नस्तद्धित इति लोपो न भवति ॥

( २ ) अन्नविकारवाचिभ्यो यत् प्रत्ययो भवति । शष्कुलीभ्यो हितं शष्कुल्यम् । प्यम् । ओदन्यम् ॥

## ११५—तद्धरतिवहत्यावहतिभाराद्वंशादिभ्यः ॥ अ० ॥ ५ । १ । ५० ॥

द्वितीयासमर्थाद् वंशादिभ्यः परस्माद् भारशब्दाद्धरत्यादिषु यथाविहितं प्रत्ययो भवति । वंशभारं हरति वहत्यावहति वा, वांशभारिकः । कौटजभारिकः । भारादिति किम् । वंशं हरति । वंशादिभ्य इति किम् । व्रीहिभारं हरति । अत्र मा भूत् :–

वंश । कुटज । बल्वज । मूल । अक्ष । स्थूणा । अश्मन् । अश्व । इक्षु । खट्वा । इति वंशादयः ॥

## ११६—छेदादिभ्यो नित्यम् ॥ अ० ॥ ५ । १ । ६४ ॥

द्वितीयासमर्थछेदादिप्रातिपदिकेभ्यो नित्यमर्हतीत्यर्थे यथाविहितं प्रत्ययो भवति छेदनं नित्यमर्हति । छैदिकः :—

छेद । भेद । द्रोह । दोह । वर्त । कर्ष । संप्रयोग । विप्रयोग । प्रेषण । संप्रश्न । विप्रकर्ष । विराग विरंगं च । वैरङ्गकः । इति छेदादयः ॥

## ११७—दण्डादिभ्यो यः ॥ अ० ॥ ५ । १ । ६६ ॥

द्वितीयासमर्थदण्डादिप्रातिपदिकेभ्योऽर्हतीत्यर्थे यः प्रत्ययो भवति । दण्डमर्हति, दण्ड्यः :–

दण्ड । मुसल । मधुपर्क । कशा । अर्घ । मेधा । मेघ । युग । उदक । वध । गुहा । भाग । इभ । इति दण्डादयः ॥

## ११८—व्युष्टादिभ्योऽण् ॥ अ० ॥ ५ । १ । ९७ ॥

सप्तमीसमर्थव्युष्टादिप्रातिपदिकेभ्यो दीयते कार्यमित्येतयोरर्थयोरण् प्रत्ययो भवति । व्युष्टे दीयते कार्यं वा वैयुष्टम् :–

व्युष्ट । नित्य । निष्क्रमण । प्रवेशन । तीर्थ । संभ्रम । आस्तरण । संग्राम । संघात । अग्निपद । पीलुमूल । प्रवास । उपसंक्रमण । दीर्घ । उपवास । इति व्युष्टादयः ॥

## ११९—तस्मै प्रभवति संतापादिभ्यः ॥ अ० ॥ ५ । १ । १०१ ॥

चतुर्थीसमर्थसन्तापादिप्रादिपदिकेभ्यः प्रभवतीत्यर्थे ठञ् प्रत्ययो भवति । सन्तापाय प्रभवति, सान्तापिकः :–

सन्ताप । संनाह । संग्राम । संयोग । संपराय । संपेष । निष्पेष । निसर्ग । असर्ग । विसर्ग । उपसर्ग । उपवास । प्रवास । संघात । संमोदन । सक्तु ॥ मांसौदनादिगृहीतादपि । मांसौदनिकः । मांसिकः । औदनिकः ॥ निर्घोष । सर्ग । संपात । संवाद । संवेशन । इति संतापादयः ॥

## १२०—अनुप्रवचनादिभ्यश्छः ॥ अ० ॥ ५ । १ । १११ ॥

प्रथमासमानाधिकरणानुप्रवचनाप्रातिपदिकेभ्यः प्रयोजनमित्यर्थे छः प्रत्ययो भवति अनुप्रवचनं प्रयोजनमस्य, अनुप्रवचनीयम् :—

अनुप्रवचन । उत्थापन । प्रवेशन । अनुप्रवेशन । उपस्थापन । संवेशन । अनुवेशन । अनुवचन । अनुवादन । अनुवासन । आरम्भण । आरोहण । प्ररोहण । अन्वारोहण । इत्यनुप्रवचनादयः ॥

## १२१—पृथ्वादिभ्य इमनिज्वा ॥ अ० ॥ ५ । १ । १२२ ॥

षष्ठीसमर्थपृथ्वादिप्रातिपदिकेभ्यो भावेऽर्थे इमनिच् प्रत्ययो वा भवति । वावचन मणादेः समावेशार्थम् । पृथोर्भावः प्रथिमा । पार्थवम् । पृथुत्वम् । पृथुता :—

पृथु । मृदु । महत् । पटु । तनु । लघु । बहु । साधु । वेणु । आसु । बहुल । गुरु । दण्ड । ऊरु । खण्ड । चण्ड । बाल । अकिंचन । होड । पाक । वत्स । मन्द । स्वादु । ह्रस्व । दीर्घ । प्रिय । वृष । ऋजु । क्षिप्र । क्षुद्र । इति पृथ्वादयः ॥

## १२२—वर्णदृढादिभ्यः ष्यञ् च ॥ अ० ॥ ५ । १ । १२३ ॥

वर्णविशेषवाचिभ्यो दृढादिभ्यश्च प्रातिपदिकेभ्यो भावे ष्यञ् चादिमनिच् प्रत्ययो भवति । शुक्लस्य भावः शौक्ल्यम् । शुक्लिमा । शुक्लत्वम् । शुक्लता । दार्ढ्यम् । द्रढिमा । दृढत्वम् । दृढता :—

दृढ । परिवृढ । भृश । कृश । चक्र । आम्र । लवण । ताम्र । अम्ल । शीत । उष्ण । जड । बधिर । पण्डित । मधुर । मूर्ख । मूक । वेर्यातलाभमतिमनःशारदानाम् ॥ समो मतिमनसोर्जवने (१) ॥ बाल । तरुण । मन्द । स्थिर । बहुल । दीर्घ । मूढ । आक्रुष्ट । इति दृढादयः ॥

## १२३—गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ अ० ॥ ५ । १ । १२४ ॥

गुणवचनेभ्यो ब्राह्मणादिभ्यश्च प्रातिपदिकेभ्यो भावे कर्मणि चाभिधेये ष्यञ् प्रत्ययो भवति । जडस्य भावः कर्म वा जाड्यम् । ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यम् :—

ब्राह्मण । वाडव । माणव । चौर । मूक । आराधय । विराधय । अपराधय । उपराधय । एकभाव । द्विभाव । त्रिभाव । अन्यभाव । समस्थ । विषमस्थ । परमस्थ ।

(१) वेः परेभ्यो यातादिभ्यः ष्यञ् । वैयात्यम् । वैलाभ्यम् । वैमत्यम् । वैमनस्यम् । वैशारद्यम् । समः पराभ्यां मतिमनोभ्यां वेगेऽर्थे ष्यञ् । साम्मत्यम् । साम्मनस्यम् ॥

मध्यमस्थ । अनीश्वर । कुशल । कपि । चपल । अचेतस् । निपुण ।अर्हतो नुम् च॥ आर्हन्त्यम् । संवादिन् । संवेशिन् । बहुभाषिन् । बालिश । दुष्पुरुष । कापुरुष। दायाद । विशसि । धूर्त । राजन् । संभाषिन् । शीर्षपातिन् । अधिपति । अलस । पिशाच । पिशुन । विशाल ।गणपति ।धनपति ।नरपति ।गडुल ।निव । निधान । विष । सर्ववेदादिभ्यः स्वार्थे (२) ॥ चतुर्वेदस्योभयपदवृद्धिश्च ॥ चातुर्वैद्यम् ।स्वभाव। निघातिन् । विघातिन् । राजपुरुष । विशस्ति । विशाय । विशात । विजात । नयात । सुहित । दीन । विदग्ध । उचित । समग्र । शली । तत्पर । इदम्पर । यथातथा । पुरस् । पुनः । पुनर् । अभीक्ष्ण । तरतम । प्रकाम । यथाकाम । निष्कुल ।स्वराज । महाराज । युवराज । सम्राज् । अविदूर । अपिशुन । अनृशंस। अयथातथ । अयथापुर । स्वधर्म्म । अनुकूल । परिमाण्डल । विश्वरूप । ऋत्विज् । उदासीन । ईश्वर । प्रतिभू । साक्षि । मानुष । आस्तिक । नास्तिक । युगपत् । पूर्वापर । उत्तराधर । इति ब्राह्मणादयः ॥

## १२४-वा०-चातुर्वर्ण्यादीनां स्वार्थ उपसंख्यानम्॥अ०॥५।१।१२४

चत्वार एव वर्णाश्चातुर्वर्ण्यम् । चातुराश्रमम् :—

चतुर्वर्ण । चतुराश्रम । त्रिलोक । त्रिस्वर । षड्गुण । सेना । सन्निधि । समीप। उपमा । सुख । इति चतुर्वर्णादयः ॥

## १२५—पत्यन्तपुरोहितादिभ्यो यक् ॥अ०॥ ५ । १ । १२८॥

षष्ठीसमर्थेभ्यः पत्यन्तेभ्यः पुरोहितादिभ्यश्च प्रातिपदिकेभ्यो भावकर्मणोर्यक् प्रत्ययो भवति सेनापतेर्भावः कर्म,वा सैन्यापत्यम् । प्राजापत्यम् । पुरोहितस्य भावः कर्म वा, पौरोहित्यम् :—

पुरोहित । राजन् । संग्रामिक । एषिक ।वर्मित ।खण्डिक ।दण्डिक ।छत्रिक। मिलिक । पिण्डिक । बाल ।मन्द । स्नानिक ।चडितिक । कृषिक ।पूतिक ।पत्रिक। प्रतिक ।अजानिक ।सलनिक ।सूचिक।राक्षर। सूचक ।पक्षिक। सारथिक। जलिक। सूतिक । अञ्जलिक । शर्मिक । चर्मिक ।कर्मिक ।शीलिक । मूलिक । तिलिका। तिल्विक । अञ्जतिका । ऋषिक । पुत्रक । पथिका । प्रचिका । प्रविक । परिचक पूजनिक ॥ राजाऽसे ( १ ) । मूचिक । स्वरिक । चडिक ॥ इति पुरोहितादयः॥

---

( १ ) सर्वे एव वेदाः सार्ववैद्यम् । सार्वलौक्यम् । सार्वराज्यम् । सार्वगुण्यम् । आकृतिगणोऽयम् ॥

( २ ) राज्ञो भावः कर्म वा राज्यम् । समासेतु ब्राह्मणादित्वात्ष्यञ् सौराज्यम्॥

## १२६—प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ॥ अ० ॥ ५ । १ । १२९ ॥

प्राणभृज्जातिभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्च प्रातिपदिकेभ्यो भावकर्मणोरञ् प्रत्ययो भवति । अश्वस्य भावः कर्म वा, आश्वम् । औष्ट्रम् । कौमारम् । कैशोरम् । औद्गात्रम् :—

उद्गातृ । उन्नेतृ । प्रतिहर्त्तृ । रथगणक । पक्षिगणक । पत्तिगणक । सुष्ठु । दुष्ठु । अध्वर्यु । वधू ॥ सुभग मंत्रे (१) ॥ प्रशास्तृ । होतृ । पोतृ । कर्त्तृ । इत्युद्गात्रादयः ॥

## १२७—हायनान्तयुवादिभ्योऽण् ॥ अ० ॥ ५ । १ । १३० ॥

हायनान्तेभ्यो युवादिभ्यश्च षष्ठीसमर्थप्रातिपदिकेभ्यो भावकर्मणोरर्थयोरण् प्रत्ययो भवति। द्विहायनस्य भावः कर्म वा, द्वैहायनम्। यूनो भावः कर्म वा, यौवनम् :—

युवन् । स्थविर । होतृ । यजमान । कमण्डलु ॥ पुरुषाऽसे (२)॥ सुभ्रातृ । यातृ । श्रवण । कुस्त्री । सुस्त्री । सुहृदय । सुभ्रातृ । वृषल । दुर्भ्रातृ ॥ हृदयाऽसे (३) ॥ चौलज्ञ । कतक । परिव्राजक । कुशल । चपल । निपुण । पिशुन । सब्रह्मचारिन् । कुतूहल । अनृशंस । भ्रातृ । कुचुक । कन्दुक । दुःस्त्री । दुर्हृदय । दुर्हृत् । मिथुन । कुलली । महस् । कतक । कितव । पोत ॥ इति युवादयः ॥

## १२८—द्वन्द्वमनोज्ञादिभ्यश्च ॥ अ० ॥ ५ । १ । १३३ ॥

द्वन्द्वसंज्ञकेभ्यो मनोज्ञादिभ्यश्च षष्ठीसमर्थप्रातिपदिकेभ्यो भाववकर्मणोरर्थयोर्वुञ् प्रत्ययो भवति । गोपालपशुपालानां भावः कर्म वा, गौपालपशुपालिका । शैष्योपाध्यायिका । मनोज्ञस्य भावः कर्म वा, मानोज्ञकम् :—

मनोज्ञ । कल्याण । प्रियरूप । छान्दस । छात्र । मेधाविन् । अभिरूप । आढ्य । कुलपुत्र । श्रोत्रिय । चोर । धूर्त । वैश्वदेव । युवन् । ग्रामपुत्र । ग्रामखण्ड । ग्रामकुमार अमुष्यपुत्र । अमुष्यकुल । शतपुत्र । कुशल । बहुल । अवश्य । अहोपुरुष ॥ इति, मनोज्ञादयः ॥

---

(१) सुभगस्य भावः सौभगो मंत्रः ॥

(२) पुरुषस्य भावः कर्म पौरुषम् सुपुरुषत्वमिति समासे ॥

(३) हार्दयम् । समासेतु परमहृदयत्वमित्येव ॥

१२९—तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥ अ० ॥ ५ । २ । २४ ॥

पील्वादिभ्यः कर्णादिभ्यश्च षष्ठीसमर्थं प्रातिपदिकेभ्यो यथासंख्यं पाकमूलयोरर्थयोः कुणब्जाहचौ प्रत्ययौ भवतः । पीलूनां पाकः पीलुकुणः । कर्णस्य मूलं, कर्णजाहम् :—

पीलु । कर्कन्धु । शमी । करीर । कुवल । बदर । अश्वत्थ । खदिर । इति पील्वादयः॥

कर्ण । अक्षि । नख । मुख । मख । केश । पाद । गुल्फ । भ्रूभङ्ग । दन्त । ओष्ठ । पृष्ठ । अङ्गुष्ठ ॥ इति कर्णादयः ॥

१३०—तदस्य संजातं तारकादिभ्य इतच् ॥ अ० ॥ ५ । २ । ३६

प्रथमासमर्थेभ्यस्तारकादिप्रातिपदिकेभ्योऽस्येति षष्ठ्यर्थे इतच् प्रत्ययो भवति। तारकाः संजाता अस्य,तारकितं नभः।पुष्पितो वृक्षः संजातग्रहणप्रकृतिविशेषणम् :—

तारका । पुष्प । मुकुल । कण्टक । पिपासा । सुख । दुःख । ऋजीष । कुड्मल । सूचक । रोग । विचार । तन्द्रा । वेग । पुत्त्रा । श्रद्धा । उत्कण्ठ । भर । द्रोह । गर्भादप्राणिनि ( १ ) ॥ फल । उच्चार । स्तबक । पल्लव । खण्ड । क्षिनुष्या । अभ्र । अङ्गारक । अङ्गार । वर्णक । पुलक । कुवलय । शैवल । गर्व । तरङ्ग । कल्लोल । पण्डा । चन्द्र । स्रवक । मुद्रा । राग । हस्त । कर । सीमन्त । कर्दम । कज्जल । कलङ्क । कुतूहल । कन्दल । आन्दोल । अन्धकार । कोरक । अङ्कुर । रोमाञ्च । हर्ष । उत्कर्ष । क्षुधा । ज्वर । गोर । दोह । शास्त्र । मुकुर । तिलक । बुभुक्षा । निद्रा । तारकादिराकृतिगणः ॥ इति तारकादयः ॥

१३१—विमुक्तादिभ्योऽण् ॥ अ० ॥ ५ । २ । ६१ ॥

अध्यायानुवाकयोरभिधेययोर्विमुक्तादिप्रातिपदिकेभ्यो मत्वर्थेऽण् प्रत्ययो भवति। विमुक्तं वर्त्तते ऽस्मिन् स वैमुक्तोऽध्यायो ऽनुवाको वा । दैवासुरः :—

विमुक्त । देवासुर । वसुमत् । सत्वत् । उपसत् । दशार्हपयस् । हविर्धान । मित्री । सोमापूषन् । अग्नाविष्णू । वृत्रहति । इडा । रक्षोऽसुर । सदसत् । परिषादक् । वसु । मरुत्वत् । पत्नीवत् । महीयल । सत्वत् (२) । दशार्ह । वयस् । पतत्रि । सोम । महित्री । हेतु । अस्यहत्य । दशार्ण । उर्वशी । सुपर्ण । इति विमुक्तादयः ॥

---

(१) गर्भिताः शालयः । अप्राणिनो तिवचनाद् गर्भिणी भार्या । इत्यत्रेतच् न भवति ॥

(२) सत्वदिति शब्दोऽस्मिन् गणे द्विवारं पठ्यते । यद्येकस्तालव्यादिर्भवेत्तदा तु युक्त मन्यथा प्रामादिकः पाठः ॥

१३२—गोषदादिभ्यो वुन् ॥ अ० ॥ ५ । २ । ६२ ॥

अध्यायानुवाकयोरभिधेययोर्गोषदादिप्रातिपदिकेभ्यो मत्वर्थे वुन् प्रत्ययो भवति। गोषदशब्दोऽस्मिन्नस्ति, गोषदकोऽध्यायोऽनुवाको वा । इषेत्वकः :—

गोषद । इषे त्वा । मातरिश्वन् । देवस्य त्वा । देवीरापः । कृष्णोऽस्याखरेष्टः । देवीं धियम् । रक्षोहण । अञ्जन । प्रभूत । प्रतूर्त । कृशान । युञ्जान । सहस्रशीर्षा । वार्तस्रते । कशास्व । स्वाहाप्राण । प्रसुस्त ॥ इति गोषदादयः ॥

१३३—आकर्षादिभ्यः कन् ॥ अ० ॥ ५ । २ । ६४ ॥

आकर्षादिभ्यः सप्तमीसमर्थप्रातिपदिकेभ्यः कुशल इत्यर्थे कन् प्रत्ययो भवति । आकर्षे कुशल आकर्षकः :—

आकर्ष । त्सरु । पिपासा । पिचण्ड । अशनि । अश्मन् । विचय । चय । जय । आचय । अय । नय । निपाद । गद्गद । दीप । ह्रद । ह्राद । ह्लाद । शकुनि । पिशाच । पिण्ड ॥ इत्याकर्षादयः ॥

१३४—रसादिभ्यश्च ॥ अ० ॥ ५ । २ । ९५ ॥

प्रथमासमानाधिकरणरसादिप्रातिपदिकेभ्योऽस्यास्त्यस्मिन्नित्यर्थे मतुप् प्रत्ययो भवति । रसादिगुणवाचकेभ्योऽन्येमत्वर्थीयाः प्रत्यया माभूवन्निति सूत्रारम्भः।रूपिणी कन्येत्यत्र तु शोभापरत्वं रूपस्य । रसोऽस्मिन्नस्तीति,रसवान् । रूपवान् :—

रस । रूप । गन्ध । स्पर्श । शब्द । स्नेह । गुणात् । एकाचः (१) ॥ इतिरसादयः ॥

१३५—सिध्मादिभ्यश्च ॥ अ० ॥ ५ । २ । ९७ ॥

सिध्मादिप्रातिपदिकेभ्यो मत्वर्थे विकल्पेन लच् प्रत्ययो भवति । सिध्मोऽस्यास्तीति सिध्मलः । सिध्मवान् । अत्र पक्षे मतुबिष्यते नत्वत इनिठनौ :—

सिध्म । गडु । मणि । नाभि । जीव । निष्पाव । पांसु । सक्तु । हनु । मांस । परशु ॥ पार्ष्णिधमन्योर्दीर्घश्च ॥ पार्ष्णीलः । धमनीलः । पर्ण । उदक । प्रज्ञा । मण्ड । पार्श्व । गण्ड । ग्रन्थि । वातदन्तबलललाटगलानामूङ् च ॥ वातूलः । दन्तूलः । बलूलः । ललाटूलः । गलूलः ॥ जटाघटाकालाः क्षेपे ॥ जटालः । घटालः । कालालः । सक्थि । कर्ण । स्नेह । शीत । श्याम । पिङ्ग । पित्त । शुष्क । पृथु । मृदु । मञ्जु । पत्र । चटु । कपि । कण्डु । संज्ञा । क्षुद्रजन्तूपतापाच्चेष्यते । क्षुद्रजन्तुः । यूकालः । मक्षिकालः । उपताप—विचर्चिकालः । विपादिकालः । मूर्च्छालः । इति सिध्मादयः ॥

---

(१) अत्र गुणशब्दो रसादीनां विशेषणम् । एकाच् शब्दादपि मतुब् भवति नत्वतइनिठनौ । स्ववान् । स्ववान् ॥

## १३६—लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥ अ० ॥ ५ । २ । १००॥

लोमादिभ्यः पामादिभ्यः पिच्छादिभ्यश्च प्रातिपदिकेभ्यो मत्वर्थे यथासंख्यं श, न, इलच् इत्येते प्रत्यया भवन्ति । लोमान्यस्य सन्तीति लोमशः । लोमवान् । पाम विद्यतेऽस्य स पामनः । पामवान् । पिच्छमस्यास्तीति पिच्छिलः । पिच्छलवान् :–

लोमन् । रोमन् । वल्गु । बभ्रु । हरि । कपि । शुनि । तरु । इति लोमादयः ॥ पामन् । वामन् । हेमन् । श्लेष्मन् । कद्रु । वलि । श्रेष्ठ । पलल । सामन् । अङ्गात्कल्याणे ॥ शाकीपलालीदद्र्वा ह्रस्वत्वं च ॥ विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ॥ लक्ष्म्या अच्च (१) ॥ इति पामादयः ॥ पिच्छ । उरस् । ध्रुवका । क्षुवका । जटाघटाकालात् क्षेपे (२) ॥ वर्ण । उदक । पङ्क । प्रज्ञा । इति पिच्छादयः ॥

## १३७—व्रीह्यादिभ्यश्च ॥ अ० ॥ ५ । २ । ११६ ॥

प्रथमासमानाधिकरणव्रीह्यादिप्रातिपदिकेभ्यो मत्वर्थे इनिठनौ प्रत्ययौ भवतः । व्रीहयोऽस्य सन्तीति व्रीही । व्रीहिकः । व्रीहिमान् :–

व्रीहि । माया । शिखा । मेखला । संज्ञा । बलाका । माला । वीणा । वडवा । अष्टका । पताका । कर्मन् । चर्मन् । हंसा (३) । यवखद । कुमारी । नौ (४) । शीर्षान्नञः ॥ अशीर्षी । अशीर्षिका । इति व्रीह्यादयः ॥

## १३८—तुन्दादिभ्य इलच्च ॥ अ० ॥ ५ । २ । ११७ ॥

तुन्दादिप्रातिपदिकेभ्यो मत्वर्थे इलच् चकारादिनिठनौ मतुप् च प्रत्यया भवन्ति । तुन्दोऽस्यास्तीति तुन्दिलः । तुन्दी । तुन्दिकः । तुन्दवान् :—

तुन्द । उदर । पिचण्ड । घट । यव । व्रीहि । स्वाङ्गाद्विवृद्धौ च (५) ॥ इति०

---

(१) अङ्ग शब्दात्कल्याणे नः प्रत्ययः । कल्याणकरमंगं शरीरमस्याः सा, अङ्गना । शाकिनः । पलालिनः । दद्रुणः । विषु—अच् इत्यवस्थायां नः प्रत्ययस्तदेवोत्तरपदस्याच् भागस्य लोपः।विष्वगस्यास्तीति विषुणः।लक्ष्मी अस्यास्तीति लक्ष्मणः।

(२) कुत्सिता जटा अस्य सन्तीति जटिलः । एवं घटिलः । कालिलः ॥

(३) शिखादिभ्य इनिरेवेष्यते नतु ठक् ॥

(४) यवखदादिभ्यष्ठगेवेष्यते शेषादुभयम् ॥

(५) विवृद्ध्युपाधिभूतात् स्वाङ्गवाचिनः प्रातिपदिकादिलच् । दीर्घा नासिकाऽस्यास्तीति नासिकिलः । लम्बौ कर्णौ यस्य स कर्णिलः । ओष्ठिलः ॥

## १३९—अर्श आदिभ्योऽच् ॥ अ० ॥ ५ । २ । १२७ ॥

अर्श आदिप्रातिपदिकेभ्योमत्वर्थेऽच् प्रत्ययो भवति। अर्शांस्यस्य विद्यन्तेऽस, अर्शसः:—

अर्शस् । उरस् । तुन्द । चतुर । पलित । जटा । घटा । अभ्र । कर्दम । आम। लवण । स्वाङ्गाद्धीनात् ॥ वर्णात् (१) ॥ आकृतिगणोयम् । इत्यर्श आदयः ॥

## १४०—सुखादिभ्यश्च ॥ अ० ॥ ५ । २ । १३१ ॥

सुखादिप्रातिपदिकेभ्यो मत्वर्थे इनिः प्रत्ययो भवति। मतुबादीनामपवादः। सुखमस्यास्तीति सुखी । दुःखी :—

सुख । दुःख । तृप्र । कृच्छ्र । आस्र । अलीक । करुणा ।कृपण ।सोढ । प्रमीप। शील । हल ॥ माला क्षेपे (२) ॥ प्रणय । इति सुखादयः ॥

## १४१—पुष्करादिभ्यो देशे ॥ अ० ॥ ५ । २ । १३५ ॥

पुष्करादिप्रातिपदिकेभ्यो मत्वर्थे देशेऽभिधेये इनिः प्रत्ययो भवति पुष्करोऽस्मिन्नस्तीति पुष्करी देशः । पद्मी वा । देश इति किम् । पुष्करवान् हस्ती :—

पुष्कर । पद्म । उत्पल । तमाल । कुमुद । नड । कपित्थ । बिस । मृणाल । कर्दम । शालूक । विगर्ह । करीष । शिरीष । यवास । प्रवास । हिरण्य । कैरव । कल्लोल । तरङ्ग । वयस । इति पुष्करादयः ॥

## १४२—बलादिभ्यो मतुबन्यतरस्याम् ॥ अ० ॥ ५ । २ । १३६ ॥

बलादिप्रातिपादिकेभ्यो मत्वर्थे विकल्पेन मतुप् पक्ष इनिः ठक् तु न भवति। बलमस्यास्तीति बलवान् । बली :—

बल । उत्साह । उद्भाव । उद्वास । उद्वाम । शिखावल । वृगमूल । दंश । कुल आयाम। व्यायाम । उपयाम। आरोह । अवरोह । परिणाह । युद्ध ॥ इति बलादयः ॥

## १४३—देवपथादिभ्यश्च ॥ अ० ॥ ५ । ३ । १०० ॥

देवपथादिप्रातिपदिभ्यो इवार्थे प्रतिकृतौ संज्ञायां च विहितस्य कन् प्रत्ययस्य लुब् भवति । देवपथस्येव प्रतिकृतिः, देवपथः । हंसपथः :—

देवपथ । हंसपथ । वारिपथ । जलपथ । राजपथ । शतपथ । सिंहगति । उष्ट्रग्रीवा । चामरज्जु । रज्जु । हस्त । इन्द्र । दण्ड । पुष्प । मत्स्य । रथपथ । शङ्कुपथ । सिंहपथ । आकृतिगणोऽयम् । इति देवपथादयः ॥

---

(१) हीनशब्दात्परस्मात् स्वाङ्गादजेव स्यान्नतु मतुबादिः ।अक्षिभ्यां हीनो हीनाक्षः । हीनहस्तः । हीनबाहवः । वर्णादिति श्वेतादेर्ग्रहणंनलकारादेः । श्वेतो वर्णोऽस्यास्तीति श्वेतः । नीलः । कालः । पीतः । हरितः । इत्यादि ॥

(२) कुत्सिता मालाऽस्यास्तीति माली । मतुम्माभूत् । प्रणयी ॥

## १४४—शाखादिभ्यो यत् ॥ अ० ॥ ५ । ३ । १०३ ॥

शाखादिप्रातिपदिकेभ्यो इवार्थे यत् प्रत्ययो भवति। शाखेव शाख्यः। मुख्यः :—

शाखा । मुख । जघन । शृङ्ग । मेघ । चरण । स्कन्ध । शिरस् । उरस् । अग्र। शरण । इति शाखादयः ॥

## १४५—शर्करादिभ्योऽण् ॥ अ० ॥ ५ । ३ । १०७ ॥

शर्करादिप्रातिपदिकेभ्यो इवार्थेऽण् प्रत्ययो भवति । शर्करेव, शार्करम् :—

शर्करा । कपालिका । पिष्टिका । कनिष्ठिक । कपिष्ठिक । पुण्डरीक । शतपत्र । गोलोमन् । गोपुच्छ । नराचि । नकुल । सिकता । इति शर्करादयः ॥

## १४६—अङ्गुल्यादिभ्यष्ठक् ॥ अ० ॥ ५ । ३ । १०८ ॥

अङ्गुल्यादिप्रातिपदिकेभ्यः इवार्थे ठक् प्रत्ययो भवति । अङ्गुलिरिवाङ्गुलिकः :—

अङ्गुलि । भरुज । बभ्रु । वल्गु । मण्डर । मण्डल । शष्कुल । कपि । उदश्वित् । गोणी । उरस् । शिखा । कुलिश । इत्यङ्गुल्यादयः ॥

## १४७—दामन्यादित्रिगर्त्तषष्ठाच्छः ॥ अ० ॥ ५ । ३ । ११६ ॥

दामन्यादिभ्यस्त्रिगर्त्तषष्ठेभ्यश्चायुधजीविसंघवाचिभ्यः प्रातिपदिकेभ्यः स्वार्थे छः प्रत्ययो भवति । त्रिगर्त्तः षष्ठो येषां ते त्रिगर्त्तषष्ठाः । दामन्येवदामनीयः । दामनीयौ । दामन्यः । तद्राजत्वाद् बहुवचने लुक् । त्रिगर्त्तषष्ठाः । कौण्डोपरथएव, कौण्डोपरथीयः । अन्यत्पूर्ववत् । दाण्डकि । कौष्टकि । जालमानि । ब्रह्मगुप्त । जानकि । इति त्रिगर्त्तषष्ठाः । अत्र जानकिरित्यस्यैव त्रिगर्त्त इति नामान्तरम् :—

दामनी । औलपि । आकिदन्ती । काकरन्ति । काकदन्ति । शत्रुन्तपि । सार्वसेनि । बिन्दू । मौञ्जायन । उलभ । सावित्रीपुत्र । अच्युतन्ति । कोकतन्ती । तुलभ । दैवथापि । औतकी । अपच्युतकी । कर्की । पिण्ड ॥ इति दामन्यादयः ॥

## १४८—पर्श्वादियौधेयादिभ्यामणञौ ॥ अ० ॥ ५ । ३ । ११७ ॥

पर्श्वादिभ्यो यौधेयादिभ्यश्चायुधजीविसंघवाचिभ्यः प्रातिपदिकेभ्यः स्वार्थेऽणञौ प्रत्ययौ यथासंख्यं भवतः । पर्शुरेव, पार्शवः । यौधेयः :—

पर्शु । असुर । रक्षस् । वाल्हीक । वयस् । मरुत् । दशार्ह । पिशाच । विशाल । अशनि । कार्षापण । सत्वत् । वसु । इति पर्श्वादयः ॥

यौधेय । कौशेय । क्रौशेय । शौक्रेय । शौभ्रेय । धार्त्तेय । वार्त्तेय । जाबालेय । त्रिगर्त्त । भरत । उशीनर । इति यौधेयादयः ॥

१४९—स्थूलादिभ्यः प्रकारवचने कन् ॥ अ० ॥ ५ । ४ ३ ॥

स्थूलादिप्रातिपदिकेभ्यःप्रकारवचनेद्योत्येकन् प्रत्ययोभवति।स्थूलप्रकारः,स्थूलकः :-

स्थूल । अणु । माष । इषु ॥ कृष्णतिलेषु ॥ यवव्रीहिषु ॥ इक्षुतिलपाद्यकालावदाताः सुरायाम् ॥ गोमूत्र आच्छादने ॥ सुराया अहौ ॥ जीर्णशालिषु । पत्रमूले समस्तव्यस्ते ( १ ) कुमारी पुत्र । कुमार । श्वशुर । मणि ॥ इति स्थूलादयः ॥

१५०—यावादिभ्यः कन् ॥ अ० ॥ ५ । ४ । २९ ॥

यावादिप्रातिपदिकेभ्यः स्वार्थे कन् प्रत्ययो भवति । याव एव, यावकः :-

याव । मणि । अस्थि । चण्ड । पीतस्तम्ब । ऋतावुष्णशीते । पशौ लूनवियाते । अणुनिपुणे । पुत्रकृत्रिमे ॥ स्नात वेदसमाप्तौ ॥ शून्यरिक्ते । दानकुत्सिते ॥ तनुसूत्रे ॥ ( २ ) । ईयसश्च ॥ श्रेयस्कः । ज्ञात । कुमारीक्रीडनकानिच । इति यावादयः ॥

१५१—विनयादिभ्यष्ठक् ॥ अ० ॥ ५ । ४ । ३४ ॥

विनयादिप्रातिपदिकेभ्यः स्वार्थे ठक् प्रत्ययो भवति । विनयएव,वैनयिकः :-

विनय । समय । उपायाद् ध्रस्वत्वं च । औपयिकः । संगति । कथंचित् । अकस्मात् । समयाचार । उपचार । समाचार । व्यवहार ।सम्प्रदान । समुत्कर्ष । समूह । विशेष । अत्यय । अस्थि । कण्डु । इति विनयादयः ॥

१५२—प्रज्ञादिभ्यश्च ॥ अ० ॥ ५ । ४ । ३८ ॥

प्रजानातीति प्रज्ञः । प्रज्ञादिप्रातिपदिकेभ्यः स्वार्थेऽण् प्रत्ययो भवति । प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । यस्यास्तु प्रज्ञा विद्यते सा प्राज्ञा भवति :-

प्रज्ञ । वणिक् । उशिक् । उष्णिक् । प्रत्यक्ष । विद्वस् । विदन् । षोडन् । षोडश । विद्या । मनस् । श्रोत्र शरीरे । श्रोत्रम् । जुह्वत् । कृष्ण मृगे । कार्ष्णः । चिकीर्षत् । चोर । शक । योध । वक्षस् । चक्षुस् । धूर्त्त । वसु । एत् । मरुत् । क्रुङ् । राजा । सत्वन्तु । दशार्ह । वयस् । आतुर । असुर । रक्षस् । पिशाच । अशनि । कार्षापण । देवता । बन्धु ॥ इति प्रज्ञादयः ॥

---

( १ ) कृष्ण प्रकाराः कृष्णकास्तिलाः । यवका व्रीहयः । इक्षुका । तिलका । पाद्यका । कालका । अवदातका वा सुरा । मूत्रकमाच्छादनम् । सुराकः सर्पः । जीर्णकाः शालयः । पत्रकंसमस्तम् । मूलकं व्यस्तम् ॥

(२) उष्णकः,शीतको वा ऋतुः । लूनकः,वियातको वा पशुः ।अणुको निपुणः। पुत्रकः कृत्रिमः।स्नातको वेदपारगः।शून्यकं रिक्तम्।कुत्सितं दानं दानकम् ।तनुकंसूत्रम् ॥

१५३—द्विदण्ड्यादिभ्यश्च ॥ अ० ॥ ५ । ४ । १२८ ॥

द्विदण्ड्यादिशब्देषु बहुव्रीहिसमासे समासान्त इच् प्रत्ययो निपात्यते । द्वाभ्यां दण्डाभ्यां हन्यतेऽसौ द्विदण्डि । अव्ययीभावसमासे परिगणनमतोऽव्ययत्वम् । एवं द्विमुसलि :—

द्विदण्डि । द्विमुसलि । उभाञ्जलि । उभयाञ्जलि । उभाकर्णि । उभयाकर्णि । उभादन्ति । उभयादन्ति । उभाहस्ति । उभयाहस्ति । उभापाणि । उभयापाणि । उभावाहु । उभयावाहु (१) । एकपदि । प्रोष्ठपदि । आढ्यपदि । सपदि । निकुच्यकर्णि । संहतपुच्छि ॥ इति द्विदण्ड्यादयः ॥

१५४—पादस्य लोपोऽहस्त्यादिभ्यः ॥ अ० ॥ ५ । ४ । १३८ ॥

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपो बहुव्रीहौ । व्याघ्रपादाविव पादावस्य, स व्याघ्रपात् । अहस्त्यादिभ्य इति किम् । हस्तिपादः :—

हस्तिन् । कटोल । गण्डोल । गण्डोलक । महिला । दासी । गणिका । कुसूल । इति०

१५५—कुम्भपदीषु च ॥ अ० ॥ ५ । ४ । १३९ ॥

कुम्भपदीप्रभृतयः कृतपादसमासान्तलोपाः समुदाया बहुव्रीहौ समासे निपात्यन्ते :—

कुम्भपदी । शतपदी । अष्टापदी । जालपदी । एकपदी । मालापदी । मुनिपदी । गोधापदी । गोपदी । कलशीपदी । घृतपदी । दासीपदी । निष्पदी । आर्द्रपदी । कुणपदी । कृष्णपदी । द्रोणपदी । द्रुपदी । शकृत्पदी । सूपपदी । पञ्चपदी । अर्वपदी । स्तनपदी । स्थूलपदी । सूत्रपदी । कलहंसपदी । द्विपदी । विषपदी । सुपदी । सूकरपदी । सूचीपदी । इति कुम्भपदीप्रभृतयः ॥

१५६—उरःप्रभृतिभ्यः कप् ॥ अ० ॥ ५ । ४ । १५१ ॥

उरःप्रभृत्यन्ताद्बहुव्रीहेः समासान्तः कप् प्रत्ययो भवति । व्यूढमुरोऽस्य स व्यूढोरस्कः । प्रियसर्पिष्कः :—

उरस् । सर्पिस् । उपानह् । पुमान् । अनड्वान् । नौः । पयः । लक्ष्मीः । दधि । मधु । शालिः ॥ अर्थान्नञः ॥ अनर्थकः । इत्युरःप्रभृतयः ॥

१५७—उञ्छादीनाञ्च ॥ अ० ॥ ६ । १ । १६० ॥

उञ्छादीनां शब्दानामन्त उदात्तः स्वरो भवति :—

उञ्छ । म्लेच्छ । जञ्ज । जल्प । जप । व्यध । वध ॥ युगकालविशेषे रथाद्यु-

(१) अत्रोभयत्र निपातनादिच्प्रत्ययस्यलोपः । प्रत्ययलक्षणेन चाव्ययीभावसंज्ञाभवत्येव । अत्रापिकेचिच्छन्दात्तत्पुरुषसमासान्ता निपात्यन्ते । तेऽर्थसंगत्या ज्ञेयाः ॥

पकरणे च ॥ गरौ दूष्येऽन्तः ॥ वेगवेदचेष्टबन्धाः करणे ॥स्तुयुद्रुवश्छन्दसि । परिष्टुत् । संयुत् । परिद्रुत् ॥ वर्त्तनिः स्तोत्रे ॥ श्वभ्रे दरः ॥ साम्वतापौ भावगर्हायाम् ॥ उत्तमशश्वत्तमौ सर्वत्र ॥ भचमन्थभोगदेहाः ॥ इत्युञ्छादयः ॥

## १५८—वृषादीनाञ्च ॥ अ० ॥ ६ । १ । २०३ ॥

वृषादीनामादिरुदात्तो भवति :—

वृषः । जनः । ज्वरः । ग्रहः । हयः । गयः । नयः । तयः । पयः । वेदः । अंशः । दवः । सूदः । गुहा ॥ शमरणौ संज्ञायां संमतौ भावकर्मणोः ॥ मंत्रः । शान्तिः । कामः । यामः । आरा । धारा । कारा । वहः । कल्पः । पादः ॥ आकृतिगणोऽयम् । अविहितलक्षणमाद्युदात्तत्वं वृषादिषु द्रष्टव्यम् ॥ इति वृषादयः ॥

## १५९—कार्तकौजपादयश्च ॥ अ० ॥ ६ । २ । ३७ ॥

कृतद्वन्द्वसमासाः कार्त्तकौजपादयः शब्दाः पूर्वपदप्रकृतिस्वरा भवन्ति ।कृतस्यापत्यं कार्त्तः । कुजपस्यापत्यम् कौजपः । कार्त्तश्च कौजपश्च :—

कार्त्तकौजपौ । सावर्णिमाण्डूकेयौ । आवन्त्यश्मकाः । पैलश्यापर्णेयाः ।पैलश्यापर्णेयौ।कपिश्यापर्णेयाः । शैतिकाचपांचालेयाः । कटुकवार्चलेयौ । शाकलशुनकाः । शाकलसणकाः ।शुनकधात्रेयाः ।सणकबाभ्रवाः ।आर्चाभिमौद्गलाः । कुन्तिसुराष्ट्राः । चिन्तिसुराष्ट्राः । तण्डवतण्डाः । गर्गवत्साः । अविमत्तकामविद्धाः । बाभ्रवशालङ्कायनाः । बाभ्रवदानच्युताः । कठकालापाः । कठकौथुमाः । कौथुमलौकाक्षाः । स्त्रीकुमारम् । मौदपैप्पलादाः । मौदपैप्पलादाः । द्विःपाठः समासान्तोदात्तार्थः । वत्सजरत् । सौश्रुतपार्थवाः । जरामृत्यू । याज्यानुवाक्ये ॥ इति कार्त्तकौजपादयः ॥

## १६०—कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूःपण्यकम्बलोदासीभाराणाञ्च ॥अ०॥ ६ । २ । ४२ ॥

कुरुगार्हपत, रिक्तगुरु, असूतजरती, अश्लीलदृढरूपा, पारेवडवा, तैतिलकद्रू, पण्यकम्बल इत्येषां समासानां दासीभारादीनां च पूर्वपदं प्रकृतिस्वरं भवति । कुरूणां गार्हपतं कुरुगार्हपतम् । रिक्तो गुरुः रिक्तगुरुः । असूता जरती, असूतजरती । अश्लीला दृढरूपा अश्लीलादृढरूपा । दास्या भारो दासीभारः :—

दासीभारः । देवहूतिः । देवजूतिः । देवसूतिः । देवनीतिः । वसुनीतिः । ओषधिः । चन्द्रमाः । अविहितलक्षणः पूर्वपदप्रकृतिस्वरो दासीभारादिषु द्रष्टव्यः ॥

१६१—युक्तारोह्यादयश्च ॥ अ० ॥ ६ । २ । ८१ ॥

युक्ता रोह्यादिषु पूर्वपदमाद्युदात्तं निपात्यते :—

युक्तारोही।आगतरोही।आगतयोधी।आगतवञ्ची।आगतनर्दी।आगतप्रहारी। आगतमत्स्या।क्षीरहोता।भगिनीभर्त्ता।ग्रामगोधुक्। अश्वत्रिरात्रः।गर्गत्रिरात्रः। व्युष्टत्रिरात्रः। शणपादः।समपादः।एकशितिपात् ॥ पात्रेसम्मितादयश्च ॥इति०

१६२—घोषादिषु च ॥ अ० ॥ ६ । २ । ८५ ॥

घोषादिषु चोत्तरपदेषु परेषु पूर्वपदमाद्युदात्तं भवति :—

दाक्षिघोषः। दाक्षिकटः। दाक्षिपल्वलः। दाक्षिवल्लभः। दाक्षिह्रदः। दाक्षिबदरी। दाक्षिपिङ्गलः। दाक्षिपिशङ्गः।दाक्षिशालः।दाक्षिरक्षः। दाक्षिशिल्पी। दाक्ष्यश्वत्थः। कुन्दतृणम्। दाक्षिशाल्मली। आश्रममुनिः। शाल्मलिमुनिः। दाक्षिपुंसा। दाक्षिकूटः। इति घोषादयः ॥

१६३—प्रस्थेऽवृद्धमकर्क्यादीनाम् ॥ अ० ॥ ६ । २ । ८७ ॥

प्रस्थ उत्तरपदेकर्क्यादिरहितमवृद्धं पूर्वपदमाद्युदात्तं भवति। इन्द्रप्रस्थः। कुण्डप्रस्थः। अवृद्धमिति किम्।दाक्षिप्रस्थः। अकर्क्यादीनामिति किम्। कर्कीप्रस्थः :—

कर्की।मघी।मकरी।कर्कन्धू।शमी।करीर।कटुक।कुवल।कवल।बदर ।।इति०

१६४—मालादीनां च ॥ अ० ॥ ६ । २ । ८८ ॥

प्रस्थ उत्तरपदे मालादय आद्युदात्ता भवन्ति। मालाप्रस्थः। शालाप्रस्थः :—

माला। शाला। शोणा। द्राक्षा। क्षौमा।क्षामा। काञ्ची।एक काम। इति०

१६५—क्रत्वादयश्च ॥ अ० ॥ ६ । २ । ११८ ॥

सोरुत्तरपदस्थाः क्रत्वादयो बहुव्रीहौ समासे आद्युदात्ता भवन्ति। सुक्रतुः :—

क्रतु। दृशीक। प्रतीक। प्रपूर्त्ति। हव्य। भग। इति क्रत्वादयः ॥

१६६—आदिश्चिहणादीनाम् ॥ अ० ॥ ६ । २ । १२५ ॥

कन्थान्ते नपुंसकेतत्पुरुषेचिहणादिपूर्वपदानामादिरुदात्तोभवतिचिहणकन्थम् :—

चिहण। मडर। मडुर। वैतुल। पटत्क। वैडालिकर्णः। वैतालिकर्णिः। कुक्कुट। चिक्कण। चित्कण ॥ इति चिहणादयः ॥

## १६७—चूर्णादीन्यप्राणिषष्ठ्याः ॥ अ० ॥ ६ । २ । १३४ ॥

तत्पुरुषसमासेऽप्राणिवाचिनः षष्ठ्यन्तात्पराणि चूर्णादीन्युत्तरपदानि आद्युदात्तानि भवन्ति । मुद्गस्य चूर्णं मद्गचूर्णम् :—

चूर्ण । करिप । करिव । शाकिन । शाकट । द्राक्षा । तूस्त । कुन्दम । दलप चमसी । चक्कन । चक्कन । चौल ॥ इति चूर्णादीनि ॥

## १६८—उभे वनस्पत्यादिषु युगपत् ॥ अ० ॥ ६ । २ । १४० ॥

वनस्पत्यादिषु समासेषूभे पूर्वोत्तरपदे युगपत्प्रकृतिस्वरे भवतः :—

वनस्पतिः । बृहस्पतिः । शचीपतिः । तनूनपात् । नराशंसः । शुनःशेपः । शण्डामर्कौ तृष्णावरूत्री । बम्बाविश्ववयसौ । मर्मृत्युः । इति वनस्पत्यादयः ॥

## १६९—संज्ञायामनाचितादीनाम् ॥ अ० ॥ ६ । २ । १४६ ॥

संज्ञायां विषये गतिकारकोपपदात्परं क्तान्तमुत्तरपदमन्तोदात्तं भवति । आचितादीन् वर्जयित्वा । संभूतः । धनुष्खाता । अनाचितादीनामिति किम् :—

आचितम् । पर्य्याचितम् । आस्थापितम् । परिगृहीतम् । निरुक्तम् । प्रतिपन्नम् प्रश्लिष्टम् । उपहतम् । उपस्थितम् । संहिताऽगवि ॥ इत्याचितादयः ॥

## १७०—प्रवृद्धादीनां च ॥ अ० ॥ ६ । २ । १४७ ॥

प्रवृद्धादिशब्दानां क्तान्तमुत्तरपदमन्तोदात्तं भवति । प्रवृद्धं यानम् :—

प्रवृद्धो वृषलः । प्रयुक्ताः सक्तवः । आकर्षेऽवहितः । अवहितो भोगेषु । खट्वारूढः । कविशस्तः । आकृतिगणत्वात् पुनरुत्स्यूतं वासोदेयम् । पुनर्निष्कृतो रथः । इति०

## १७१—निरुदकादीनि च ॥ अ० ॥ ६ ॥ २ । १८४ ॥

निरुदकादीनि च शब्दरूपाण्यन्तोदात्तानि निपात्यन्ते :—

निरुदकम् । निरुलपम् । निरुपलम् । निर्मशकम् । निर्मक्षिकम् । निष्कालकः । निष्कालिकः । निष्पेपः । दुस्तरीपः । निस्तरीपः । निस्तरीकः । निरजिनम् । उदजिनम् । उपाजिनम् ॥ परेर्हस्तपादकेशकर्षाः । परिहस्तः । परिपादः । परिकेशः । परिकर्षः । आकृतिगणोऽयम् ॥ इति निरुदकादयः ॥

## १७२—प्रतेरंश्वादयस्तत्पुरुषे ॥ अ० ॥ ६ । २ । १९३ ॥

तत्पुरुषसमासे प्रतेरुत्तरा अंश्वादयोऽन्तोदात्ता भवन्ति । प्रतिगतोंऽशुः प्रत्यंशुः :—

अंशु । जन । राजन् । उष्ट्र । खेटक । अजिर । आर्द्रा । श्रवण । कृत्तिका । अर्द्ध । पुर ॥ इत्यंश्वादयः ॥

## १७३—उपाद् द्व्यजजिनमगौरादयः ॥ अ० ॥ ६ । २ । १९४ ॥

उपादुत्तरं द्व्यच्कमजिनं च तत्पुरुषसमासे गौरादिवर्जितमन्तोदात्तं भवति। उपगतो देवमुपदेवः । उपसोमः । उपाजिनम् ।अगौरादय इति किम्।उपगौरः :—

गौर।तैष।तैल ।लेट।लोट।जिह्वा।कृष्णा।कन्या।गुड।कल्प।पाद । इति गौरादयः॥

## १७४—स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ अ० ॥ ६ । ३ । ३४ ॥

भाषितपुंस्कशब्दात्परस्य समानाधिकरणस्त्रीलिङ्गे पूरणीप्रियादिवर्जिते उत्तरपदे परतः पुंशब्दस्येवरूपं भवति। दर्शनीया भार्या यस्य स दर्शनीयभार्यः । दीर्घजङ्घः ।अप्रियादिष्वितिकिम्। कल्याणीप्रियः :—

प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्तिः । सचिवा । अम्बा । कान्ता ।क्षान्ता ।समा । चपला । दुहिता । वामा ॥इति प्रियादयः ॥

## १७५—वनगिर्योःसंज्ञायांकोटरकिंशुलकादीनाम्॥अ०॥६।३।११७॥

वन, गिरि, इत्येतयोरुत्तरपदयोः परयोर्यथासंख्यं कोटरादीनां किंशुलादीनां च संज्ञायां विषये दीर्घो भवति । कोटरावणम् । किंशुलकागिरिः :—

कोटर । मिश्रक । पुरक । सिध्रक । सारिक । इति कोटरादयः ॥ किंशुलक । साल्वक । अञ्जन । लोहित । कुक्कुट । इति किंशुलकादयः ॥

## १७६—मतौ बह्वचोऽनजिरादीनाम् ॥ अ० ॥ ६ । ३ । ११९ ॥

मतौ प्रत्यये परतोऽजिरादिवर्जितस्य बह्वचो दीर्घो भवति संज्ञायां विषये ।उदुम्बरावती । मशकावती । अमरावती । अनजिरादीनामिति किम् :—

अजिरवती।खदिरवती।पुलिनवती।हंसकारण्डवती।चक्रवाकवती।इत्यजिरादयः॥

## १७७—शरादीनां च ॥ अ० ॥ ६ । ३ । १२० ॥

संज्ञायां विषये मतौ परतः शरादीनां च दीर्घो भवति । शरावती । वंशावती:—

शर । वंश । धूम । अहि । कपि । मणि । मुनि । शुचि । हनु । इति शरादयः॥

## १७८— द्वारादीनां च ॥ अ० ॥ ७ । ३ । ४ ॥

द्वारादीनां य्वाभ्यामुत्तरस्याचामादेरचः स्थाने वृद्धिर्न भवति ।किन्तु ताभ्यां पूर्वावैजागमौ भवतः। द्वारेनियुक्तः,दौवारिकः।स्वरमधिकृत्य कृतो ग्रन्थः,सौवरः :—

द्वार । स्वर । व्यल्कश । स्वस्ति । स्फ्यकृत । स्वादुमृदु । श्वन् स्व ।इति द्वारादयः ॥

१७६—स्वागतादीनां च ॥ अ० ॥ ७ । ३ । ७ ॥

स्वागतादीनां शब्दानां य्वाभ्यां पूर्वौ ञित् णित् कित् तद्धिते परत ऐजागमौ न भवतः । वृद्धिस्तुभवत्येव । स्वागतमित्याह स्वागतिकः । स्वध्वरेण चरति, स्वाध्वरिकः :–

स्वागत । स्वध्वर । स्वङ्ग । व्यङ्ग । व्यड । व्यवहार । स्वपति । इतिस्वागतादयः॥

१८०—अनुशतिकादीनां च ॥ अ० ॥ ७ । ३ । २० ॥

ञितिणितिकितिचतद्धिते परतोऽनुशतिकादिशब्दानां पूर्वपदस्योत्तरपदस्याचामादेरचःस्थानेवृद्धिर्भवति। अनुशतिकस्येदमानुशातिकम् :–

अनुशतिक । अनुहोड । अनुसंवत्सर । अङ्गारवेणु । असिहत्य । वध्योग । पुष्करसत् । अनुहरत् । कुरुकत । कुरुपञ्चाल । उदकशुद्ध । इहलोक । परलोक । सर्वलोक । सर्वपुरुष । सर्वभूमि । प्रयोग । परस्त्री । राजपुरुषात् ष्यञि ॥सूत्रनड॥ आकृतिगणोऽयम् ( १ ) ॥ इत्यनुशतिकादयः ॥

१८१—न्यङ्क्वादीनां च ॥ अ० ॥ ७ । ३ । ५३ ॥

न्यङ्क्वादिषु कुत्वं निपात्यते । नितरामञ्चतीति :–

न्यङ्कुः । मद्गुः । भृगुः । दूरेपाकः । फलेपाकः । क्षणेपाकः । फलेपाका । दूरेपाकुः । फलेपाकुः । तक्रम् । वक्रम् । व्यतिषङ्गः । अनुषङ्गः । अवसर्गः । उपसर्गः । मेघः । श्वपाकः । मांसपाकः । कपोतपाकः । उलूकपाकः । संज्ञायामघः । अवदाघः । निदाघः ( २ ) । न्यग्रोधः ॥ इति न्यङ्क्वादयः ॥

१८२—पूजनात्पूजितमनुदात्तंकाष्ठादिभ्यः ॥अ०॥८।१। ६७ ॥

पूजनवाचिभ्यः काष्ठादिभ्यः परं पूजितमुत्तरपद मनुदात्तं भवति। काष्ठश्चासावध्यापकः काष्ठाऽध्यापकः :–

काष्ठ । दारुण । अमातापुत्र । अयुत । अद्भुत । अनुक्त । भृश । घोर । परम । सु । अति । अनुज्ञात । कल्याण । वेश ।। इति काष्ठादयः ॥

१८३—मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥ अ० ॥ ८ । २ । ९ ॥

मकारान्तान्मकारोपधादवर्णान्तादवर्णोपधाच्च परस्य मतुपोमकारस्य वकारादेशो भवति मतु यवादिभ्यः परस्य मस्य वो भवति । मान्तात् किंवान् । शंवान् ।

(१)अत्राकृतिगणेनेदमपि सिद्धं भवति। अभिगममर्हति,अभिगामिकः । अधिदेवेभवमाधिदैविकम्।आधिभौतिकम्।आध्यात्मिकम्।चतस्रएवविद्याः,चातुर्वैद्यम्।स्वार्थेष्यञ्।

(२) अघ, अवदाघ, निदाघ, इति त्रिषु शब्देषु संज्ञायामेव कुत्वम् । अन्यत्र । अर्हः । अवदाहः । निदाहः ॥

मकारोपधात् । शमीवान् । दाडिमीवान् । अवर्णान्तात् । वृक्षवान् । खट्वावान् । अवर्णोपधात् । यशस्वान् । भास्वान् । मादुपधायाश्चेति किम् । अग्निमान् । अयवादिभ्य इति किम् । यवमान् :-

यव । दल्मि । ऊर्मि । भूमि । कृमि । क्रुञ्चा । वशा । द्राक्षा । ध्रजा । वेशा । भ्रजि । ध्वजि । सञ्जि । वजि । व्रजि । शञ्जि । सिञ्जि । हरित् । ककुत् । गरुत् । इक्षु । मधु । द्रुम । मण्ड । धूम । आकृतिगणोऽयम् ॥

### १८४—कस्कादिषु च ॥ अ० ॥ ८ । ३ । ४८ ॥

कस्कादिशब्देषु विसर्जनीयस्य सः षो वा कवर्ग पवर्गयोः परतः :-

कस्कः । कौतस्कुतः । भ्रातुष्पुत्रः । शुनस्कर्णः । सद्यस्कालः । सद्यस्क्रीः । साद्यस्कः । कांस्कान् । सर्पिष्कुण्डिका । धनुष्कपालम् । बर्हिष्पूलम् । यजुष्पात्रम् । अयस्काण्डः । मेदस्पिण्डः । आकृतिगणोऽयम् । इति कस्कादयः ॥

### १८५—सुषामादिषु च ॥ अ० ॥ ८ । ३ । ९८ ॥

सुषामादिषु सकारस्य मूर्द्धन्यादेशो निपात्यते । शोभनं साम यस्यासौ सुषामा ब्राह्मणः :-

सुषामा । निःषामा । दुष्षेधः । सुषन्धिः । दुःषन्धिः । निषन्धिः । सुष्ठु । दुष्ठु । गौरिषक्थः संज्ञायाम् ॥ प्रतिष्णिका । जलाषाहम् । नौषेचनम् । दुन्दुभिषेवनम् ॥ अविहितलक्षणो मूर्द्धन्यः सुषामादिषु द्रष्टव्यः । इति सुषामादयः ॥

### १८६—नरपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ॥ अ० ॥ ८ । ३ । ११० ॥

रेफपरस्य सकारस्य सृपिसृजिस्पृशिस्पृहि सवनादीनां सस्य मूर्द्धन्यादेशो न भवति । रपर, विस्रंसिका । विस्रब्धः । विसृपः । विसर्जनम् । सुस्पृशम् । निस्पृहम् :-

सवने सवने । सूते सूते । सामे सामे । सवनमुखे सवनमुखे । अनुसवनमनुसवनम् । बृहस्पतिसवः । शकुनिसवनम् । संवत्सरे संवत्सरे । मुसलं मुसलम् । गोसनिम् । अश्वसनिम् । इति सवनादयः ॥

### १८७—क्षुभ्नादिषु च ॥ अ० ॥ ८ । ४ । ३९ ॥

क्षुभ्ना इत्यादि शब्देषु नस्य णकारादेशो न भवति । यथाप्राप्तिनिषेधः :-

क्षुभ्नाति । क्षुभ्नीतः । क्षुभ्नन्ति । नृनमन । नन्दिन् नन्दिन् । नगर । नरीनृत्यते । तृप्नु । नर्त्तन । गहन । नन्दन । निवेश । निवास । अग्नि । अनूप ॥ आचार्यादणत्वं च ॥ आचार्यभोगीनः । आचार्यानी ॥ हायन ॥ इरिकादिभ्यः वनोत्तरपदेभ्यः संज्ञायाम् ॥

इरिका । तिमिर । समीर । कुवेर । हरि । कर्मार । क्षुभ्नादिराकृतिगणः ॥ इति क्षुभ्नादयः ॥ समाप्तश्चायं ग्रंथः ॥

# अथ गणपाठशुद्धिपत्रम् ॥

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ३ | पुस्तककौं | पुस्तकौं |
| ४ | ६ | क्वर्थः | क्त्वोर्थः |
| १२ | ७ | गौपनौ | गौपवनौ |
| १५ | २ | लोहिताभ्यो | लोहितादिभ्यो |
| १८ | १६ | ० | गौलस्य |
| २३ | १२ | द्वार | द्वार |
| २६ | ८ | ० | विश्वदेव |
| २८ | १२ | विदग्ध | विजग्ध |
| ३३ | १ | ह्यतु | हृतु |
| ३७ | ८ | सुङ्गि | सङ्गि |
| ३८ | ३ | शाङ्कव्यम् | शङ्कव्यम् |
| ३८ | २४ | न् | न |
| ४० | ८ | छेदनं | छेदं |
| ४० | ११ | वैरङ्कः | वैरङ्गिकः |
| ४२ | १० | परिमाण्डल | परिमण्डल |
| ४२ | १८ | सासैन्यापत्यम् | वासैनापत्यम् |
| ४८ | २० | प्रज्ञः | प्राज्ञः |
| ५१ | २२ | तैतित | तैतिल |
| ५१ | २५ | अश्लीला | अश्लील |
| ५२ | २ | पूर्ण | पूर्व |
| ५४ | १६ | ० | भजन |

# ॥ अथ वेदाङ्गप्रकाशः ॥

तत्रत्यः ।

पंचदशो भागः ॥

## उणादिकोषः ।

पाणिनिमुनिप्रणीतायामष्टाध्याय्यां

द्वादशो भागः ।

श्रीमत्स्वामिदयानन्दसरस्वतीकृतव्याख्यासहितः ।
पण्डितज्वालादत्तशर्म्मणा संशोधितः ।

पठनपाठनव्यवस्थायां पञ्चदशं पुस्तकम् ।

मुन्शी समर्थदान के प्रबन्ध से
वैदिकयन्त्रालय प्रयाग में मुद्रित हुआ



संवत् १९४० आश्विनकृष्णा ३

पहली बार १००० पुस्तक छपे

मूल्य ॥।)

# अथ भूमिका ॥

सब उणादिगणस्थ शब्द इस वक्ष्यमाण एक सूत्र की विशेष व्याख्या में हैं ॥

**उणादयो बहुलम् ॥ अ० ॥ ३ । ३ । १ ॥**

वर्त्तमान काल में विहित धातुओं से उणादि प्रत्यय बहुल करके होते हैं ॥

**भूतेऽपि दृश्यन्ते ॥ अ० ॥ ३ । ३ । २ ॥**

और कहीं २ भूतकाल में भी इन का विधान दीख पड़ता है ॥

**भविष्यति गम्यादयः ॥ अ० ॥ ३ । ३ । ३ ॥**

और गमी आदि गणपठित वक्ष्यमाण शब्द भविष्यत्काल में ही होते हैं। उणादि प्रत्ययों के होने के लिये यह तीनों काल का नियम है । गम्यादि शब्द । गमी । आगामी । प्रस्थायी । प्रतिरोधी । प्रतिबोधी । प्रतियोधी । प्रतियोगी । प्रतियायी । आयायी । भावी । इन से अन्य शब्द भूत और वर्त्तमान अर्थों के बोधक होते हैं । अब जितनी प्रकृतियों से जितने उणादि प्रत्यय कहे हैं उतने ही जानना चाहिये वा कुछ विशेष । इस लिये—

**बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम् ।**
**कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु ॥ १ ॥**
**नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।**
**यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥ २ ॥**
**संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।**
**कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥ ३ ॥ महाभाष्ये**

इसी सूत्र की व्याख्या में महाभाष्यकार पतञ्जलिमुनि उणादि पाठ की व्यवस्था बांधते हैं कि (बाहुलकम्) उणादि पाठ में थोड़े से धातुओं से प्रत्यय विधान किया है सो बहुल के होने से वे प्रत्यय अन्य धातुओं से भी होते हैं। इसी प्रकार प्रत्यय

भी थोड़े से संकेतमात्र पढ़े हैं। सत्प्रयोगों में देख के इन से अन्य भी नवीनप्रत्ययों की कल्पना कर लेनी चाहिये । जैसे ( ऋफिडः ) इस शब्द में ऋधातु से फिड प्रत्यय समझा जाता है। इसी प्रकार अन्यत्र भी जानना चाहिये। तथा जितने शब्द उणादिगण से सिद्ध होते हैं उन में जितने कार्य्य सूत्रों से प्राप्त हैं वे सब नहीं होते यह भी बहुलग्रहण का ही प्रताप है। इस में यदि कोई ऐसा प्रश्न करे कि उणादिपाठ में जितने धातुओं से जितने प्रत्यय विधान किये और शब्दों की सिद्धि में जितने कार्य सूत्रों से हो सकते हैं उन से अधिक वा न्यून क्यों होते हैं। तो इस का उत्तर यह है कि ( नैगम० ) वैदिक शब्द और लौकिक संज्ञा शब्द ये सब अच्छे प्रकार सिद्ध नहीं हो सकते। इस लिये पूर्वोक्त तीन प्रकार के कार्य उणादि-गण में बहुल वचन से होते हैं इस बहुल के होने से अनेक प्रकार के सहस्रों शब्द सिद्ध होते हैं ॥ १ ॥

संज्ञा शब्द वे ही कहाते हैं जो किसी निज वाच्य के साथ संबन्ध रक्खें फिर उन को सिद्ध करने से क्या प्रयोजन है क्योंकि वे संज्ञाशब्द जिस निज अर्थ के बोधक हैं उस का बोध तो प्रकृति प्रत्ययार्थ सम्बन्ध के विना भी कराते ही हैं वही पश्चात् होगा इस लिये ( नामच० ) इस विषय में निरुक्तकारों और वैयाकरणों में शाकटायन ऋषि का ऐसा मत है कि सब संज्ञा ( रूढि ) शब्द प्रकृति प्रत्ययार्थ के संबन्ध से यौगिक तथा योगरूढता से अर्थों के बोधक होते हैं। इन से भिन्न अन्य ऋषियों के मतानुसार सब संज्ञा शब्द रूढि अर्थात् अव्युत्पन्न होते हैं। अब जहां शब्दों में प्रकृतिप्रत्यय कुछ भी नहीं जान पड़ता वहां(प्रत्ययतः०)यदि प्रत्यय जान पड़े तो धातु की कल्पना और धातु जान पड़े तो नवीन प्रत्यय की कल्पना कर लेनी चाहिये। इस प्रकार उन शब्दों का अर्थ ज्ञान कर लेना चाहिये ॥ २ ॥ संज्ञा शब्दों में धातुओं का रूप पूर्व भाग में और शब्द के पर भाग में धातु से परे प्रत्यय की कल्पना करनी चाहिये। और जिस शब्द में जिस अनुबन्ध का कार्य्य दीख पड़े वैसे ही सानुबन्धक धातु वा प्रत्ययों की ऊहा करनी चाहिये। अर्थात् आत्मनेपद दीख पड़े तो अनुदात्तेत् वा ङित् धातु जानना और जो आद्युदात्त स्वर हो तो ञित् वा नित् प्रत्यय की कल्पना करनी चाहिये। यह कल्पना सर्वत्र नहीं करनी किन्तु वैदिक वा लौकिक सत्प्रयुक्त शब्दों के अर्थ जान ने के लिये शब्द के पूर्व भाग में धात्वर्थ की और पर भाग में प्रत्ययार्थ की कल्पना करनी चाहिये। यह सब संबन्ध ऋषि लोगों ने इस लिये बांधा है कि अगाध शब्दसागर की थाह व्याकरण से भी नहीं मिल सकती। जो कहें कि ऐसा व्याकरण क्यों नहीं बनाया

कि जिस से शब्दसागर के पार पहुंच जाते तो यह समझना चाहिये कि कितने ही पोथा बनाते और जन्म जन्मान्तरों भर पढ़ते तो भी पार होना दुर्लभ ही था इस लिये यह पूर्वोक्त व्याकरण से सब प्रबन्ध जताया है ॥ ३ ॥ उणादिगण में कारक व्यवस्था का यह नियम है कि –

## दाशगोघ्नौ संप्रदाने ॥ अ० ॥ ३ । ४ । ७३ ॥

यह सूत्र सामान्य कृदन्त का नियामक है कि दाश और गोघ्न शब्द औणादिक हो वा अष्टाध्यायी से सिद्ध हों परन्तु प्रत्यय संप्रदान कारक में ही हों। इस नियम से ये दोही शब्द संप्रदान में होते हैं अन्य नहीं ॥

## भीमादयोऽपादाने ॥ अ० ॥ ३ । ४ । ७४ ॥

भीमादि शब्दों में अपादान कारक में ही प्रत्यय होते हैं।भीमादि शब्द औणा-दिक हैं जैसे–भीमः । भीष्मः ।भयानकः । वरुः ।चरुः । भूमिः । रजः । संस्कारः । संक्रन्दनः । प्रपतनः । समुद्रः । स्रुचः । स्रुक् । खलतिः । इति भीमादिगणः ॥

## ताभ्यामन्यत्रोणादयः ॥ अ० ॥ ३ । ४ । ७५ ॥

उन संप्रदान और अपादान दोनों कारकों से भिन्न अन्य कारकों में उणादि प्रत्यय होते हैं । व्युत्पन्न पक्ष में उणादि प्रत्ययान्त शब्दों के यौगिक होने से प्रत्ययों को कृत्संज्ञक मान के कर्त्ता में प्राप्त हैं इस लिये यह कारक नियम है । और भाव में भी उणादि प्रत्यय होते हैं । संप्रदान और अपादान को छोड़ के अन्य कारकों में तो उणादि प्रत्ययों का यथेष्ट विधान है परन्तु बहुलवचन से कहीं संप्रदान में भी कोई प्रत्यय कर दिये हों तो चिन्ता नहीं । इस उणादिगण की एक वृत्ति छपी भी है परन्तु वही पोपलीला आदि का जगड्वाल बहुत और प्रयोजन थोड़ा सिद्ध होता है । इस लिये यह कोष बनाना पड़ा । इस ग्रंथ में सूत्रों का पाठ तथा अर्थ बहुधा सुगम है इसी लिये प्रति सूत्र का अर्थ वृत्ति में नहीं किया और जहां कुछ कठिन जान पड़ा वहां खोल दिया है । अनुवृत्ति भी बहुधा जनादी है । इस का मूल ऊपर २ पृथक् इस लिये छपवाया है कि अध्येता लोगों को पाठ करने और घोषण से कण्ठस्थ करने में सुगमता रहेगी । जो अंक सूत्र के अन्त में लिखा है वही नीचे वृत्ति के आदि में डाल दिया है । इस से बड़ी सुग-मता होगी । इस में विशेष करके लौकिक शब्द और सामान्य से वैदिक लौकिक दोनों ही सिद्ध किये हैं । निघण्टु में जितने वैदिक शब्द हैं उन में से बहुतों का

निर्वचन वृत्ति में मिले गा । सो दोनों को अकारादि सूची को देख के खोज लेना चाहिये । निर्वचन तो सब शब्दों का कर दिया है परन्तु वे धातुगणानुबंध और अर्थ के सहित यहां नहीं लिखे हैं क्यों कि ग्रंथ बहुत बढ़ जाता इस लिये धातु के प्रयोग से गण अनुबंध तथा उस के पर्य्याय शब्द से धातु के अर्थ का बोध कर लेना चाहिये । संस्कृत में वृत्ति बना ने का यही प्रयोजन है कि जो लोग पठन पाठन व्यवस्था के पहिले पुस्तकों को पढें गे उन के लिये संस्कृत कुछ कठिन नहीं होगा । और संस्कृत भी सरल ही बनाया है । कई शब्दों के अर्थ इति शब्द लगा कर भाषा में भी खोल दिये हैं ॥

## इति भूमिका

स्थान महाराणा जी का उदयपुर<br>माघकृष्ण १ संवत् १९३९

दयानन्दसरस्वती

---*---

ओ३म् ॥

# अथोणादिकोषः ॥

—◦※◦—

कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥१॥ कारुः । वायुः । पा
जायुः । मायुः । स्वादुः । साधुः । आशु । आशुः ॥ १ ॥

छन्दसीणः ॥ २ ॥ आयुः ॥ २ ॥

दृसनिजनिचरिचटिरहिभ्यो ञुण् ॥३॥ दारु । सानु । जा
चारु । चाटु । राहुः ॥ ३ ॥

---

(१) करोतीति कारुः कर्त्ता शिल्पी वा । वाति गच्छति जानाति वेति
पवनः परमेश्वरो वा । पाति रक्षति स पायू रक्षकः गुदेन्द्रियं वा । जयत्यभि
तिरस्करोति शत्रूनिति जायुः शूरः । जयति रोगानिति जायुरौषधं वैद्यो वा
मिनोति प्रक्षिपति स मायुः । अथवा मिनोति प्रक्षिपत्यूष्माणमिति मायुः पि
गां विकृतां वाचं मिनोतीति गोमायुः शृगालः । स्वद्यते भोक्तुमभीप्स्यते त
भोज्यमन्नं वा । साध्नोति धर्म्यं कर्मेति साधुः सज्जनः । अश्नुते व्याप्नोति त
शीघ्रम् । अश्नुते सद्योऽध्वानमित्याशुरश्वः । वाऽश्यते भुज्यते शीघ्रमित्याशु
ब्रीहिः बहुलवचनात्—स्नाति शोधयत्यङ्गानीति स्नायुर्नाड़ी वा । कक्यते लोल
भवति येनेति काकुः । भयादिः ध्वनेर्विकारो वा । हल्यते छिद्यतेऽन्नमने
हालुः । दन्तो वा । वसति जगदस्मिन् वा सर्वस्मिन् यो वसति स वासुरीश्वरः। इल

(२) वेद इण् धातोरुण् । एति प्राप्नोति सर्वानित्यायुर्जीवनकालः । स
द्वितीयपादे वक्ष्यते ॥

(३) दीर्यते भिद्यत इति दारु काष्ठं वा । सनति संभजति सनोति द
वा स सानुः । पर्वतैकदेशश्रृङ्गबुधमार्गवात्यापर्णवनानि च सानूनि वा । ज
ऽस्मात्सज्जानु जङ्घाया उपरिभागो वा । जनिवध्योश्चेति प्रतिषेधाऽप्यनुवर्त
सामर्थ्याद्वृद्धिर्भवति । चरति चक्षुरादिष्विति चारु शोभनम् । चटति भिनत्ति
प्रियं वचो वा । रहति त्यजति दोषानिति राहुः । ग्रहविशेषो वा ॥

क्विंजरयोः श्रिणः ॥ ४ ॥ किंशारुः । जरायुः ॥४ ॥

त्रो रश्च लः ॥ ५ ॥ तालु ॥ ५ ॥

कृके वचः कश्च ॥ ६ ॥ कृकवाकुः ॥ ६ ॥

भृमृशीङ्तॄचरित्सरितनिधनिमिमस्जिभ्य उः ॥ ७ ॥ भरुः । मरुः । शयुः । तरुः । चरुः । त्सरुः । तनुः । धनुः । मयुः । मद्गुः ॥७॥

अणश्च ॥ ८ ॥ अणुः ॥ ८ ॥

धान्ये नित् ॥ ९ ॥ अणवः ॥ ९ ॥

(४) किं शृयतेऽनेनेति किंशारुः धान्यविशेषो वा । जरां जीर्णतामेति जरायुः । गर्भाशयो गर्भावरणं वा ॥

(५) तृधातोर्ञुण् रेफस्य लत्वम् ।तरन्ति निःसरन्ति वर्णा यत इति तालु मुखैकदेशः।बाहुलकात्।अर्यते प्राप्यत इत्यालु भक्ष्यं कन्दं वा । भृणाति सन्तापेन छेदयति पदार्थानिति भालुः सूर्यः। शृणाति चित्तं हिनस्तीति शालुः । कषायद्रव्यं वा । इत्यादि ॥

(६) कृकोपपदाद्वचधातोर्ञुण् । कृकेन कण्ठेन वक्तीति कृकवाकुर्ध्वनादिर्मयूरो वा

(७) भरति बिभर्त्ति वेति भरुः । स्वामी । म्रियन्ते भूतान्यस्मिन्निति मरुर्निर्जलो देशो वा । शेतेऽसौ शयुः शयनशीलः । यस्तरति येन वा स तरुः वृक्षो वा । चरति चर्य्यतेऽग्निना भक्ष्यत इति चरुः । यज्ञपाको वा । त्सरति कुटिलं गच्छतीति त्सरुः । खड्गमुष्टिर्वा । तन्यन्ते कर्माण्यनेनेति तनुः शरीरं स्वल्पं वा । धन्यते धनं प्राप्यतेऽनेनेति धनुः शास्त्रं शस्त्रं वा । मिनोति सुशब्दं प्रक्षिपतीति मयुः वानरो वा । मज्जति शुद्धो भवतीति मद्गुः जलप्लवो पक्षी वा । न्यङ्क्वादित्वात्कुत्वम् । बाहुलकात्–गण्डति स गण्डुः वदनैकदेशः।उपधानम्–तकिया इतिप्रसिद्धं तैलं वा

(८) अणति शब्दयतीत्यणुः । अतिसूक्ष्मं वा । अत्र चकारग्रहणाद्वा–कटति जिह्वां विकारयतीति कटू रसः।वटति गुणकर्माणि विभजतीति वटुः। द्विजसुतो वा

(९) अणन्ति शब्दायन्ते येस्तेऽणवोऽन्नविशेषा वा नित्करणमाद्युदात्तस्वरार्थम् ।

शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ॥ १० ॥ शरुः । स्वरुः । स्नेहुः । त्रपु । असुः । वसुः । हनुः । क्लेदुः । बन्धुः । मनुः ॥ १० ॥

स्यन्देः सम्प्रसारणं धश्च ॥ ११ ॥ सिन्धुः ॥ ११ ॥

उन्देरिच्चादेः ॥ १२ ॥ इन्दुः ॥ १२ ॥

ईषेः किच्च ॥ १३ ॥ इषुः ॥ १३ ॥

स्कन्देः सलोपश्च ॥ १४ ॥ कन्दुः ॥ १४ ॥

सृजेरसुम् च ॥ १५ ॥ रज्जुः ॥ १५ ॥

( १० ) अत्र धातुप्रत्यययोर्निर्दिष्टसंबन्धः । एवमर्थ एव पृथक्पाठः । शृणाति-हिनस्ति येनेति शरुरायुधं क्रोधो वा । स्वयन्त उपतप्यन्ते प्राणिनोऽनेनेति स्वरुर्वज्रम् । स्निह्यति यस्मिन् स स्नेहुर्व्याधिर्वा । अग्निं प्राप्य यत्त्रपते लज्जितमिव भवतीति तत् त्रपु सीसकं रंगं वा । अस्यति प्रक्षिपति वायुमित्यसुः प्राणः । असुं प्राणं राति ददातीत्यसुरो मेघः । वस्त आच्छादयति दुःखं येन तद्वसु धनं वा । वसन्ति प्राणिनो येषु ते वसवोऽग्न्यादयोऽष्टौ । हन्यतेऽनेनेति हनुः कपोलावयवः प्रहरणं मृत्युर्वा । क्लिद्यत्यार्द्रीकरोति चित्तमिति क्लेदुश्चन्द्रमा वा प्रेम्णा बध्नातीति बन्धुः सज्जनो वा । मन्यते चराचरं जगज्जानातीति मनुरीश्वरः मनुतेऽवबुध्यते शास्त्रमिति मनुर्विद्वान् राजर्षिः । बहुलवचनात् । बिन्दत्यवयवी भवतीति बिंदुः परिमाणं जलादिकणो वा ।

( ११ ) स्यन्दन्ते प्रस्रवन्त्युदकान्यस्मिन्निति सिन्धुः ॥

( १२ ) उन्दधातोरुः प्रत्यय आदिवर्णस्येकारादेशश्च । उनत्त्यार्द्रीकरोति पदार्थानितीन्दुश्चन्द्रमा वा ॥

( १३ ) अत्र चकारात्किच्चेत्यनुवर्त्तते तेन दीर्घस्य ह्रस्वो भवति ईषति गच्छति हिनस्ति वा शत्रूनिति, इषुर्बाणो वीरो वा । कित्त्वाद् गुणाऽभावः ॥

( १४ ) स्कन्दति गच्छति शुष्यति वा येन स कन्दुः कुमाराणां क्रीडार्थे गेंद-इति प्रसिद्धं वा ॥

( १५) अत्र पूर्वसूत्रात्सलोप इत्यनुवर्त्तते । धातोरसुमागम आदिसकारलोपश्च । पुनर्ऋकारस्य यणादेश आगमसकारस्य जश्त्वं च । सृजन्त्युदकनिस्सारणायेति रज्जुर्जलोद्धरणं वा ॥

कृतेराद्यन्तविपर्ययश्च ॥ १६ ॥ तर्कुः ॥ १६ ॥

नावञ्चेः ॥ १७ ॥ न्यङ्कुः ॥ १७ ॥

फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च ॥ १८ ॥ फल्गुः । पटुः । नाकुः । मधुः । जतुः ॥ १८ ॥

वलेर्गुक्च ॥ १९ ॥ वल्गुः ॥ १९ ॥

शः कित्सन्वच्च ॥ २० ॥ शिशुः ॥ २० ॥

यो द्वे च ॥ २१ ॥ ययुः ॥ २१ ॥

कुर्भश्च ॥ २२ ॥ बभ्रुः ॥ २२ ॥

---

( १६ ) आद्यन्तविपर्ययोर्थादादौ तकारोऽन्ते ककारः । उश्च प्रत्ययः कृन्तति छिनत्ति वस्त्रादिकमनेन स तर्कुः । कर्त्तनी वा ॥

( १७ ) ये नितरामञ्चन्ति गच्छन्ति ते न्यङ्कवो जातिविशेषाः पशवो वा ॥

( १८ ) उप्रत्यये फलधातोर्गुगागमः फलति निष्पद्यते स फल्गुः असारो वा नपुंसके फल्गु फलम् ।पाटिधातोः पटिरादेशः। पाटयति ज्ञापयति सदसत्पदार्थान् स पटुर्वाग्मी विशारदो वा । नमधातोर्नाकिरादेशः नमतीति नाकुः । वल्मीको वा मनधातोर्धकारादेशः । मन्यन्ते विशेषेण जानन्ति यस्मिन् स मधुश्चैत्रो मासः । मधूको मद्यं चौन्द्रं पुष्परसो वा । जनधातोस्तकारादेशः । जायते प्रादुर्भूयतेऽनेनेति जतु लाचा वा ॥

( १९ ) वलति प्राणयतीति वल्गुः । नपुंसके वल्गु शोभनम् ॥

( २० ) सन्वद्भावाद् द्वित्वादिकम् । श्यति तनूकरोति पित्रोः शरीरमिति शिशुर्बालकं वा ॥

(२१)अत्र सन्वदित्यनुवर्तमानेपि द्वे ग्रहणमभ्यासेत्वनिवृत्त्यर्थम् । यान्ति प्राप्नुवन्ति देशान्तरमनेनेति ययुरश्वो वा ॥

(२२)अत्र द्वे इत्यनुवर्त्तते भृधातोः कुः प्रत्ययो द्वित्वं च । बिभर्त्ति सर्वमिति बभ्रुः नकुलः पिंगलो वा। सूत्रे चकारग्रहणादन्यधातुभ्योऽपि कुःप्रत्ययस्तेषां द्वित्वं च भवति । तद्यथा । करोतीति चक्रुः कर्त्ता । हन्तीति जघ्नुर्हन्ता । पाति रक्षतीति पपुः पालकः । इत्यादि ॥

पॄभिदिव्यधिगृधिधृषिहृषिभ्यः ॥ २३ ॥ पुरुः । भिदुः । विधुः । गृधुः । धृषुः । हृषुः ॥ २३ ॥

कृग्रोरुच्च ॥ २४ ॥ कुरवः । गुरुः ॥ २४ ॥

अपदुःसुषु स्थः ॥ २५ ॥ अपष्ठुः । दुष्ठुः । सुष्ठुः ॥ २५ ॥

रपेरिच्चोपधायाः ॥ २६ ॥ रिपुः ॥ २६ ॥

अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च॥२७॥ ऋजुः । पशुः । कन्तुः । अन्धुः । पांसुः । बाहुः ॥ २७ ॥

(२३) एभ्यः कुः । पिपर्त्ति पालयति पूरयति वा स पुरुः । बहुरिन्द्रियं वा भिनत्तीति भिदुर्वज्रं वा । विध्यति दुर्गन्धं दिवसं वेति विधुः कर्पूरं चन्द्रमा वा । व्यधिर्ग्रहिज्येति सम्प्रसारणम् । गृध्नोत्यभिकाङ्क्षते येन स गृधुः कामो वा । धृष्णोति प्रगल्भो भवतीति धृषुर्दक्षः । हृष्यति स हृषुर्हर्षकः । दृशीति पाठान्तरे दृशुर्दर्शकः ॥

(२४) यः करोति येन वा स कुरुः । कुरवो राजानो वा । गृणात्युपदिशति वेद-शास्त्रविद्यामाचारं च स गुरुः सर्वेषां गुरुत्वादीश्वरः । आचार्यः पिता वा ॥

(२५) अप, दुः, सु, इत्येतेषूपपदेषु स्थाधातोः कुः । अपतिष्ठतीत्यपष्ठुर्वामभागः प्रतिकूलः पदार्थो वा निन्दितस्तिष्ठतीति दुष्ठुरविनीतः । सुतिष्ठतीति सुष्ठु शोभ-नम् । सर्वत्र सुषामादित्वात् षत्वम् ॥

(२६) अनिष्टं रपति वदतीति रिपुः शत्रुः । चकारग्रहणात्कुप्रत्यये परे इका-रादेश एव समुच्चीयते ॥

(२७) कुप्रत्यये सति—अर्ज्यादिप्रकृतीनामृज्यादय आदेशा भवन्ति अर्जयति संचिनोति गुणानिति, ऋजुः कोमलो वा । पश्यति सर्वमिति पशुः पश्यन्ति येन वा स पशुरग्निः । पश्यति जानाति स्वार्थमिति पशुर्गवादिः । कमधातोस्तुक् । कामयन्ते यं स कन्तुः कामी वा । अमधातोर्धुक् । अमति रुजति गच्छति वेत्यन्धुः कूपो वा । अस्मिन् सूत्रे चकारग्रहणाद्बहुलवचनाद्वा अमधातोर्बुगागमोऽपि भवति अमन्ति गच्छन्ति चेष्टन्ते प्राणिनो येन तदम्बु जलम् । पंसयति नष्टमिव भवतीति पांसुर्धूलिर्वा पंसधातोर्दीर्घः चेनार्थं चिरकालात्संचितं गोमयं वा । इत्याद्येष्वर्थेषु पांशुरिति तालव्यान्तोऽपि शब्दो दृश्यते । बाध्यन्ते विलोड्यन्ते पदार्था याभ्यां तौ बाहू भुजौ । प्रायेणा यं द्विवचनान्तः ॥

प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ॥ २८ ॥ पृथुः । मृदुः । भृगुः ॥ २८ ॥

लंघिवंह्योर्नलोपश्च ॥ २९ ॥ लघुः । बहुः ॥ २९ ॥

ऊर्णोतेर्नुलोपश्च ॥ ३० ॥ ऊरुः ॥ ३० ॥

महति ह्रस्वश्च ॥ ३१ ॥ उरु ॥ ३१ ॥

श्लिषेः कश्च ॥ ३२ ॥ श्लिकुः ॥ ३२ ॥

आङ्परयो खनिशृभ्यां डिच्च ॥ ३३ ॥ आखुः । परशुः ॥३३॥

हरिमितयोर्द्रुवः ॥ ३४ ॥ हरिद्रुः । मितद्रुः ॥ ३४ ॥

---

( २८ ) प्रथ्यादिभ्यः कुः प्रत्ययस्तस्मिन् सति प्रथिम्रद्योः संप्रसारणं सलोपश्च प्रथते कीर्त्तिः वा विस्तारयति स पृथूराजविशेषो विस्तीर्णः पदार्थो वा । म्रदते म्रदितुं शक्यते स मृदुर्मार्दकः । कोमलं वा । भृज्जति तपसा शरीरमिति भृगुर्ऋषिः प्रतापो वा । न्यङ्क्वादित्वात्कुत्वम् ॥

(२९) लंघिवंहिभ्यां कुरनयोर्नलोपश्च । लङ्घति गन्तुं शक्नोतीति लघुः स्वल्पो वा । अस्यैव, वालमूललघ्वसुरालमङ्गुलीनां वालोरत्वमापद्यत इति वार्त्तिकेन रेफः । रघू राजविशेषः । वंहतेवर्धतेऽन्येभ्य इति बहुः । प्रचुरः संख्या वा ॥

( ३० ) ऊर्णोत्याच्छादयति यां सा ऊरुर्जङ्घा । कुप्रत्यये नुभागलोपः ॥

( ३१ ) ऊर्णुधातोः कुप्रत्ययस्तस्मिन् नुभागलोप ऊकारस्य ह्रस्वत्वं च ऊर्णोत्याच्छादयत्यल्पानित्युरु महत् ॥

( ३२ ) श्लिष्यति पदार्थैः सह संबध्यते स श्लिकुः । परवशो ज्योतिषं वा ॥

(३३) आसमन्तात्खनति भूमिमित्याखुर्मूषको वराहो वा परान् शत्रून् शृणाति हिनस्ति येन स परशुः । शस्त्रभेदः कुठारो वा पृषोदरादित्वादकारलोपे पूर्वार्थ एव पर्शुरपि दृश्यते ॥

( ३४ ) हरिणाऽश्वेन वा द्रवति गच्छतीति हरिद्रुः । दारु हरिद्रा वा । मितं परिमितं द्रवतीति मितद्रुः शोभनगमनो वा ॥

वातेर्नित् ॥ ६ ॥ वातिः । ६ ॥

अर्त्तेश्च ॥ ७ ॥ अरतिः । ७ ॥

तृहेः क्नो हलोपश्च ॥ ८ ॥ तृणम् । ८ ॥

वृञ्‌ लुठितमिताडिभ्य उलच् तण्डश्च ॥ ९ ॥ तण्डुलाः ॥ ९ ॥

दंसिष्टनौ न आ च ॥ १० ॥ दासः । १० ॥

दाशेश्च ॥ ११ ॥ दाशः । ११ ॥

उदि चेर्डैसिः ॥ १२ ॥ उच्चैः । १२ ॥

नौ दीर्घश्च ॥ १३ । नीचैः । १३ ॥

सौ रमे क्तो दमे पूर्वपदस्य च दीर्घः ॥ १४ ॥ सूरतः ॥ १४ ॥

पूञो यण् णुग्घ्रस्वश्च ॥ १५ ॥ पुण्यम् ॥ १५ ॥

---

( ६ ) वाति गच्छतीति वातिः सूर्य्यश्चन्द्रो वा ॥

( ७ ) अर्य्यते गम्यते सा अरतिः । उद्वेगो वा ॥

( ८ ) तृह्यते हन्यते तत्, तृणम् । प्रसिद्धमेव ॥

( ९ ) व्रियन्ते लुठ्यन्ते तन्यन्ते ताड्यन्ते वा ते तण्डुलाः प्रसिद्धा वा वृञादीनां स्थाने तण्डादेशः ॥

( १० ) दंसयन्ति दशति पश्यति वा स दासः । सेवकः शूद्रो वा । टित्त्वान् ङीप् । दासी । नकारस्याकारः । नित्करणं पच आद्युदात्तार्थम् ॥

( ११ ) टटनौ नकारस्य चात्वम् । दशति मत्स्यादिकमिति दाशो धीवर-स्त्रियां दाशी । धीवरी ॥

( १२ ) उच्चीयते वर्ध्यतेऽसावुच्चैः । महान् वा । स्वरादित्वादव्ययम् ॥

(१३) चेरिथेव । निचीयत इति नीचैः । अधोऽधमो वा । अस्यापि स्वरादित्वा-देवाव्ययत्वम् ॥

(१४) सुष्ठु रमत इति सूरतः । उपशान्तः कृपालुर्वा । दमार्थादन्यत्र सुरतः । क्रीडायुक्तः ॥

( १५ ) पवते पवित्रो भवति येन तत् पुण्यम् । सुकृतो धर्मो वा ॥

स्रंसेः शिः कुट् किञ्च ॥ १६ ॥ शिक्यम् ॥ १६ ॥

ऋतेः क्युजुञ्च ॥ १७ ॥ उरणः ॥ १७ ॥

हिंसेरीरन्नीरचौ ॥ १८ ॥ हिंसीरः ॥ १८ ॥

उदि दृणातेरजलचौ पूर्वपदान्त्यलोपश्च ॥ १९ ॥ उदरम् ॥

डित्खनेर्मुट् चोदात्तः ॥ २० ॥ मुखम् ॥ २० ॥

अमेः सन् ॥ २१ ॥ अंसः ॥ २१ ॥

मुहेः खो मूर्च ॥ २२ ॥ मूर्खः ॥ २२ ॥

नहेर्हलोपश्च ॥ २३ ॥ नखम् ॥ २३ ॥

शीङो ह्रस्वश्च ॥ २४ ॥ शिखा ॥ २४ ॥

---

(१६) स्रंसते गच्छतीति शिक्यम्। काचः छींका इति प्रसिद्धः। तत्र धृतं वस्तु शैक्यम् ॥

(१७) ऋच्छति गच्छतीति उरणः। मेषो वा ॥

(१८) हिनस्तीति हिंसीरः। व्याघ्रो दुष्टो वा। प्रत्ययद्वयं स्वरभेदार्थम् ॥

(१९) उद् दृणाति येनान्नमिति, उदरम्। कुक्षिस्थानम्। प्रत्ययभेदोऽत्रापि स्वरभेदार्थः ॥

(२०) खनेरजलचौ। तयोर्डित्त्वं धातोर्मुडागमश्च। तस्योदात्तत्वम्। खनत्यन्ना-दिकमनेनेति मुखमास्यम्। मुखे भवो मुख्यो रोगः। शरीरावयवाद्यत्। मुखमिवोत्तमं मुख्यम्। शाखादित्वादिवार्थे यः ॥

(२१) अमति गच्छति प्राप्नोति येन स, अंसः। स्कन्धो विभागो वा। अंसोऽस्यास्तीत्यंसलः ॥

(२२) मुह्यति विक्षिप्त इव भवतीति मूर्खः। मूर्खस्य भावो मौर्ख्यं मूर्खिमा वा। बाहुलकात् खस्येमादेशाभावः ॥

(२३) नह्यति बध्नाति रुधिरादिकमिति नखः प्राण्यङ्गं वा ॥

(२४) खः। शेतेऽसौ शिखा। चूडा केशभेदो ज्वाला वा। ह्रस्वविधानसामर्थ्याद् गुणाऽभावः ॥

माङ ऊखो मय च ॥ २५ ॥ मयूखः ॥ २५ ॥

कलिगलिभ्यां फगस्योच्च ॥ २६ ॥ कुल्फः । गुल्फः ॥ २६ ॥

स्पृशेः श्वण्शुनौ पृ च ॥ २७ ॥ पार्श्वः । पर्शुः ॥ २७ ॥

श्मनि श्रयतेर्डुन् ॥ २८ ॥ श्मश्रु ॥ २८ ॥

अश्नोतेराशुकर्मणि वरट् च ॥ २९ ॥ अश्रु ॥ २९ ॥

जनेष्टन् नलोपश्च ॥ ३० ॥ जटा ॥ ३० ॥

अच् तस्य जङ्घ च ॥ ३१ ॥ जङ्घा ॥ ३१ ॥

हन्तेः शरीरावयवे द्वे च ॥ ३२ ॥ जघनम् ॥ ३२ ॥

क्लिशेरन्लो लोपश्च ॥ ३३ ॥ केशः ॥ ३३ ॥

फलेरितजादेश्च पः ॥ ३४ ॥ पलितम् ॥ ३४ ॥

(२५) मिमीते मान्यहेतुर्भवतीति मयूखः। किरणः कान्तिः करो ज्वाला वा ॥

(२६) कलति संख्यातीति कुल्फः । शरीरावयवो रोगो वा । गलति भक्षयतीति गुल्फः । पादग्रंथिर्वा ॥

(२७) स्पृशति येन स पार्श्वः । कक्षयोरधोभागो वा । पर्शुः । आयुधं वा ॥

(२८) श्मनि मुखे श्रयतीति,श्मश्रु । श्मश्रुणी। श्मश्रूणि। पुरुषमुखरोमाणि वा ॥

(२९) अश्नुते व्याप्नोतीति, अश्रु नेत्रजलं वा। क्रुन् प्रत्ययो रुडागमश्च । एवमन्येऽपि यथायोग्यं द्रष्टव्याः ॥

(३०) जायतेऽसौ जटा। दीर्घाः केशा वा। जटा अस्य सन्तीति जटालः। सिध्मादित्वाल्लच् । जटिलः । पिच्छादित्वादिलच् ॥

(३१) तस्य जनेः । जायतेऽसौ जङ्घा । जानोरधोभागो वा ॥

(३२) हन्ति येन यो वा हन्यते तज्जघनम् । जानोरुपरिभागो वा । इवार्थे शाखादित्वाद्यः । जघनमिव जघन्यं नीचम् ॥

(३३) क्लिश्यति येन स केशः । शिरलोमानि वा । केशा अस्य सन्तीति केशवः केशिकः । केशी ॥

(३४) फलति निष्पन्नं पक्वमिव भवतीति पलितम्। केशश्वैत्यं वा। फस्य पः ॥

कृञादिभ्यः संज्ञायाम् ॥ ३५ ॥ करकः । कटकः । नरकः । कोरकः ॥ ३५ ॥

चीकयतेराद्यन्तविपर्ययश्च ॥ ३६ ॥ कीचकः । ३६ ॥

पचिमच्योरिच्चोपधायाः ॥ ३७ ॥ पेचकः । मेचकः । ३७ ॥

जनेररष्ठ च ॥ ३८ ॥ जठरम् । ३८ ॥

वचिमनिभ्यां चिच्च ॥ ३९ ॥ वठरः । मठरः । ३९ ॥

ऊर्जिदृणातेरलचौ ॥ ४० ॥ ऊर्दरः । ४० ॥

कृदरादयश्च ॥ ४१ ॥ कृदरः । मृदरः । सृदरः । ४१ ॥

हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे ॥ ४२ ॥ घतनः । ४२ ॥

(३५) करोतीति करकः करका । वृष्टिपाषाणो वा । करको दाडिमः कमण्डलुर्वा । कटति वर्षत्यावृणोति वा स कटकः । बाहुभूषणं शिखरो वा । नृणाति नयतीति नरकम् । पापभागो वा । सरति गच्छतीति सरकम् । गमनं वा । अलति भूषितो भवतीत्यलकम् । शीतादिकं वा । अलति वारयति येन तेऽलकाः । कुटिलाः केशा वा । कुरति शब्दयतीति
कोरकः । कलिका ( कली ) इति प्रसिद्धा ॥

(३६) चीकयते सहतेऽसौ कीचकः । वंशभेदो वा ॥

(३७) पचतीति पेचकः । उलूकपक्षी वा । मचते शब्दयतीति मेचकः । कृष्णवर्णो मयूरपक्षचिह्नं वा ॥

(३८) जायतेऽस्मादिति जठरम् । उदरं कठिनं वा ॥

(३९) अन्त्यस्य ठः वक्तीति वठरः । मूर्खो वा । मन्यतेऽसौ मठरः । मुनिभेदो मत्तो वा । तस्यापत्यं माठरः । माठर्यः ॥

(४०) ऊर्क् पराक्रमं रसं वा दृणातीति, ऊर्दरः । शूरो दुष्टो वा । स्वरभेदार्थं प्रत्ययद्वयम् ॥

(४१) कृत्स्नं दृणातीति कृदरः । कुशूलो वा । मृदं दृणातीति मृदरः व्याधिर्विलं वा । सृष्टिं दृणातीति सृदरः सर्पः ॥

(४२) हन्तीति घतनः । मारको वा ॥

क्रमिगमिक्षमिभ्यस्तुन् दृद्धिश्च ॥ ४३ ॥ क्रान्तुः । गान्तुः । क्षान्तुः । ४३ ॥

हर्यतेः कन्यन् हिरच् ॥ ४४ ॥ हिरण्यम् ॥ ४४ ॥

कृञः पासः ॥ ४५ ॥ कर्पासः । ४५ ॥

जनेस्तुरश्च ॥ ४६ ॥ जर्तुः ॥ ४६ ॥

ऊर्णोतेर्डः ॥ ४७ ॥ ऊर्णा । ४७ ॥

दधाते र्यन्नुट् च ॥ ४८ ॥ धान्यम् । ४८ ॥

जीर्यतेः क्रिन् रश्च वः ॥ ४९ ॥ जिव्रिः । ४९ ॥

मव्यतेर्यलोपो मश्चायतुट्चालः ॥ ५० ॥ ममायतालः ॥ ५० ॥

ऋजेः कीकच् ॥ ५१ ॥ ऋजीकः । ५१ ॥

---

( ४३ ) क्रामति पादान् विक्षिपतीति क्रान्तुः । पक्षी वा । गच्छतीति गान्तुः । पथिको वा । आगान्तुरभ्यागतः । क्षमतेऽसौ क्षान्तुः । सहनशीलो वा ॥

( ४४ ) हर्यते काम्यते तत्, हिरण्यम् । सुवर्णं वा ॥

(४५) क्रियत उत्पाद्यतेऽसौ कर्पासः तस्य भेदो वा । कर्पासस्य विकारः कार्पासं वस्त्रम् । विल्वादित्वादण् ॥

( ४६ ) जायते यत इति जर्तुः । उपस्थेन्द्रियं हस्ती वा ॥

( ४७ ) ऊर्णोत्याच्छादयति यया सा, ऊर्णा । अविमेषयो रोमाणि वा । ऊर्णां याति प्राप्नोतीत्यूर्णायुः । मेषो मेषोर्णा कम्बलो वा । ऊर्णा इव नाभिरस्य स ऊर्ण-नाभः । समासान्तोऽच् ऊर्णनाभिरिति वा समासान्तस्य विधेरनित्यत्वात् । लूताहिर्वा ॥

( ४८ ) दधाति पुष्णाति लोकानिति धान्यम् । व्रीहिर्वा । धाने पोषणे साधु धान्यमित्यपि ॥

( ४९ ) यो जीर्यति येन वा स जिव्रिः । कालः पक्षी वा । हलिचेति बाहुल-काद्दीर्घाभावः ॥

( ५० ) मव्यति बध्नातीति ममायतालः । बन्धनहेतुर्विषयो वा ॥

( ५१ ) अर्जति गच्छतीति, ऋजीकः । सूर्यो धूमो वा ॥

तनोतेर्डउः सन्वच्च ॥ ५२ ॥ तितउ ॥ ५२ ॥

अर्भकपृथुकपाका वयसि ॥ ५३ ॥

अवद्यावमाधमार्वरेफाः कुत्सिते ॥ ५४ ॥

लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः ॥५५॥ लिप्तम्। रिप्रम् ॥ ५५ ॥

क्लिशेरीच्चोपधायाः कन् लोपश्चलो नाम् च ॥५६॥ कीनाशः।

अश्नोतेराशुकर्मणि वरट् च ॥ ५७ ॥ ईश्वरः ॥ ५७ ॥

चतेरुरन् ॥ ५८ ॥ चत्वारः ॥ ५८ ॥

प्रातेररन् ॥ ५९ ॥ प्रातः ॥ ५९ ॥

---

( ५२ ) तनोति विस्तृणोति येन तत् तितउ । चालनी पेषणशोधकपात्रम् ॥

( ५३ ) ऋध्यति वर्धतेऽसावर्भकः ऋधुधातोर्वुन् धस्य भः । प्रथते वर्धते स पृथुकः । कुकन् प्रत्ययः सम्प्रसारणं च पिबतीति पाकः । कन् प्रत्ययः । अर्भकपृथुकपाका बालकपर्यायाः ॥

( ५४ ) वदितुमयोग्यमवद्यम् । नञ्पूर्वाद्वदधातोर्यत् । अवतीत्यवमः । अमः प्रत्ययः । तत्रैव वस्य धः । अधमम् । ऋच्छति गच्छतीत्यर्वा । वन् । अश्वो वा । रिफति निन्दतीति रेफः । कुत्सितपर्याया इमे ॥

( ५५ ) लीयते श्लिष्यत इति लिप्तम् । श्लिष्टम् । रीयते तत्, रिप्रं कुत्सितम् । तरौ प्रत्ययौ पुडागमः ॥

( ५६ ) क्लिश्नातीति कीनाशः । कर्षीवलो न्यायाधीशो वा । धातोरुपधाया ईत्वं लकारलोपः कन् प्रत्ययो नामागमश्चान्त्यादचः परः ॥

( ५७ ) अश्नुते, आशु, शीघ्रं करोति जगद्रचयति स, ईश्वरः । स्वामी वा । टित्वादीश्वरी । वरच् प्रत्यये । ईश्वरा ॥

( ५८ ) चतते याचतेऽसौ चतुः । संख्यावाची वा । चत्वारः । चतस्रः ॥

( ५९ ) प्रकृष्टमतति गच्छतीति प्रातः । प्रभातकालो वा । स्वरादित्वादव्ययम् ॥

अमेस्तुट् च ॥ ६० ॥ अन्तः ॥ ६० ॥

दहेर्गोऽन्त्यलोपो दस्य नः ॥ ६१ ॥ नगः ॥ ६१ ॥

षिचेः संज्ञायां हनुमौ कश्च ॥ ६२ ॥ सिंहः ॥ ६२ ॥

व्याङि घ्रातेश्च जातौ ॥ ६३ ॥ व्याघ्रः ॥ ६३ ॥

हन्तेरच् घुर च ॥ ६४ ॥ घोरम् ॥ ६४ ॥

क्षमेरुपधालोपश्च ॥ ६५ ॥ क्ष्मा ॥ ६५ ॥

तरतेड्रिः ॥ ६६ ॥ त्रयः ॥ ६६ ॥

ग्रहेरनिः ॥ ६७ ॥ ग्रहणिः ॥ ६७ ॥

प्रथेरमच् ॥ ६८ ॥ प्रथमः ॥ ६८ ॥

चरेश्च ॥ ६९ ॥ चरमः ॥ ६९ ॥

( ६० ) अमति गच्छतीति यत्रेति, अन्तः । मध्यं वा । पूर्ववदव्ययम् ॥

( ६१ ) दहति दह्यते वा स नगः । पर्वतो वृक्षो वा । बाहुलकान्नकारस्य नाकारो नागः सर्पभेदो वा ॥

( ६२ ) सिञ्चतीति सिंहः । प्रसिद्धो वा । हकारप्रत्ययो नुमागमः । चस्य कः । ककारस्य च लोपः हिनस्तीति सिंहः इति पृषोदरादित्वाद्वर्णाद्यन्तविपर्ययः ॥

( ६३ ) विशेषेण समन्ताज् जिघ्रतीति व्याघ्रः हस्ती वा ॥

( ६४ ) हन्तीति घोरम् । भयानकं वा ॥

( ६५ ) क्षमते सहते सर्वमिति क्ष्मा पृथिवी वा ॥

( ६६ ) तरतीति त्रिः । संख्यावाची वा । त्रयः । त्रीन् । त्रिभ्यः ॥

( ६७ ) गृह्णातीति ग्रहणिः । कृदिकारादिति ङीष् । ग्रहणी संग्रहणी व्याधिभेदो वा ॥

( ६८ ) प्रथते प्रख्यातो भवतीति प्रथमः । आद्य उत्तमो नूतनो वा ॥

( ६९ ) चरति गच्छति भक्षयति वा स चरमः । अन्त्यः पश्चिमो वा ॥

मङ्गेरलच् ॥ ७० ॥ मङ्गलम् ॥ ७० ॥

इत्युणादिषु पञ्चमः पादः समाप्तः ॥

मन्थानंविशदंविधायबहुलंव्युत्पन्नपक्षेनवा
ऽव्युत्पन्नेनदलेनयेनविधिवद्वाग्वारिधिर्मन्थितः ।
व्यक्ताव्यक्ततराणियत्ववचसांरत्नान्यदीप्यन्तवै
भूयात्सोयमुणादिरुत्तमगणोध्येतुर्यशोद्वये ॥ १ ॥

(७०) मङ्गति प्राप्नोति सुखं येन तन्मङ्गलम् । प्रशस्तम् मङ्गलो वारभेदो वा । मङ्गलस्य भावो माङ्गल्यम् ॥

इतिश्रीमत्स्वामिदयानन्दसरस्वतीकृतोणादिव्याख्यायां
वैदिकलौकिककोषे पञ्चमः पादः समाप्तः ॥
समाप्तश्चायं ग्रन्थः

———0———

# अथोणादिशब्दसूचीपत्रम् ॥

—:*:—

| शब्दाः | पा० | सू० | शब्दाः | पा० | सू० | शब्दाः | पा० | सू० |
|---|---|---|---|---|---|---|---|---|
| अषमम् | ५ | ५४ | अञ्जिष्ठः | ४ | २ | अणुः | १ | ८ |
| अव्यथिषः | १ | ४९ | अतिथिः | ४ | २ | अद्भुतम् | ५ | १ |
| अवसः | ३ | ११७ | अत्रिः | ४ | ६८ | अन्धुः | १ | २७ |
| अशनिः | २ | १०२ | अद्रिः | ४ | ६५ | अप्सुः | १ | ७५ |
| अश्वः | १ | १५१ | अनिलः | १ | ५४ | अम्बु | १ | २७ |
| अष्ट | १ | १५७ | अपिशलिः | ४ | २२८ | अरुः | २ | ११७ |
| अष्टका | ३ | १४८ | अभिम्लातः | ३ | ८६ | अर्जुनः | ३ | ५८ |
| अंसः | ५ | २१ | अमित्रः | ४ | १७४ | अर्जुनम् | ३ | ५९ |
| अस्त्रम् | ४ | १५९ | अरिः | ४ | १२९ | अरुणः | ३ | ६० |
| असनः | २ | ७८ | अर्चिः | २ | १०८ | अश्रुः | ५ | २९ |
| अस्मद् | १ | १३९ | अर्पिसः | ४ | २ | असुः | १ | १० |
| अस्मम् | २ | १२ | अलिः | ४ | १३९ | अस्रुः | ४ | १०२ |
| अहः | १ | १५८ | अविनः | २ | ४६ | असुरः | १ | ४२ |
| अंहः | ४ | २१३ | अविषः | १ | ४५ | अङ्कूषः | ४ | ७६ |
| अंहतिः | ४ | ६२ | अश्रिः | ४ | १३८ | अन्दूः | १ | ९३ |
| अहल्या | ४ | ११२ | अश्वित्रम् | ४ | १७३ | अरूषः | ४ | ७३ |
| अङ्गारः | ३ | १३४ | अशिरः | १ | ५२ | अग्रेगूः | २ | ६८ |
| अध्वा | ४ | ११६ | असिः | ४ | १४० | अनेहाः | ४ | २२४ |
| अथर्वा | १ | १५४ | अस्तिः | ४ | १८० | **आ** | | |
| अपाः | ४ | २२२ | अस्थि | ३ | १५४ | आखनिकः | २ | ४५ |
| अर्वा | ४ | ११३ | अहिः | ४ | १३८ | आगः | ४ | २१२ |
| अलाबूः | १ | ८७ | अंह्रिः | ४ | ६६ | आडम्बरः | ३ | १३१ |
| अश्मा | ४ | ४७ | अत्री | ४ | ६८ | आपः | २ | ५८ |
| अक्षि | ३ | १५६ | अनीकम् | ४ | १७ | आपः | ४ | २०८ |
| अग्निः | ४ | ५० | अवीः | ३ | १५८ | आपाथिकः | २ | ४५ |
| अङ्गिराः | ४ | २३६ | अलीकम् | ४ | २५ | आपतिकः | २ | ४५ |
| अग्निः | ४ | १४० | अङ्कुशः | ४ | १०७ | आपनिकः | २ | ४५ |
| अजिनम् | २ | ४८ | अङ्कुरः | १ | ३८ | आमयः | ४ | ९९ |
| अजिरः | १ | ५३ | अङ्गुलिः | ४ | २ | आम्रम् | २ | १६ |

| शब्दाः | पा० | सू० | शब्दाः | पा० | सू० | शब्दाः | पा० | सू० |
|---|---|---|---|---|---|---|---|---|
| कन्या | ४ | ११२ | क्रतुः | १ | ७६ | कश्यः | ४ | ११२ |
| कपटम् | ४ | ८१ | कर्दमः | ४ | ८४ | कशेरुः | १ | ८८ |
| कपालम् | १ | ११८ | कर्पटः | ४ | ८१ | कशेरूः | १ | ८८ |
| कपिः | ४ | १४४ | कर्परः | ३ | १३१ | कश्विः | ४ | १४० |
| कपिलः | १ | ५५ | कर्पासः | ५ | ४५ | कषाकुः | ३ | ७७ |
| कपोतः | १ | ६२ | कर्पूरः | ४ | ९० | कषीका | ४ | १६ |
| कपोलः | १ | ६६ | कर्बुरः | १ | ४१ | क्षत्रम् | ४ | १६७ |
| कफेलूः | १ | ९३ | करभः | ३ | १२२ | क्षत्ता | २ | ९४ |
| कबरः | ४ | १५५ | कर्म | ४ | १४५ | कंसः | ३ | ६२ |
| कमठः | १ | १०० | करम्बम् | ४ | ८२ | कस्तूरः | ४ | ९० |
| कम्बलः | १ | १०७ | क्रयिकः | २ | ४४ | कस्तूरी | ४ | ९० |
| कम्बूः | १ | ९३ | करीरः | ४ | ३० | काकः | ३ | ४३ |
| कमरः | ३ | १३२ | कर्वः | १ | १५५ | काकुः | १ | १ |
| कमलम् | १ | १०४ | कर्वरः | २ | १२१ | काणूकः | ४ | ३९ |
| कमलः | १ | १०४ | करीषः | ४ | २६ | काण्डम् | १ | ११५ |
| करिः | ४ | १२९ | कर्षूः | १ | ८० | कादम्बः | ४ | ८३ |
| कर्कः | ३ | ४० | कलिः | ४ | ११८ | कारिः | ४ | १२९ |
| करकः | ५ | ३५ | कल्कः | ३ | ४० | कारुः | १ | १ |
| कर्कटः | ४ | ८१ | कलत्रम् | ३ | १०६ | क्रान्तुः | ५ | ४३ |
| कर्कन्धूः | १ | ९३ | कलापकम् | २ | ३२ | कार्षिः | ४ | १२७ |
| कर्करः | ३ | १३१ | कलभः | ३ | १२२ | कार्षकः | २ | ३८ |
| कर्करीकम् | ४ | २० | कलमः | ४ | ८४ | काशिः | ४ | ११८ |
| कर्करेटुः | १ | ३७ | कलिलम् | १ | ५४ | काशूः | १ | ८५ |
| करटः | ४ | ८१ | कलुषम् | ४ | ७५ | काष्ठम् | २ | २ |
| करेटुः | १ | ३७ | कविः | ४ | १३९ | | | |
| कर्णः | ३ | १० | कवलः | १ | १०६ | काष्ठपुत्रिका | २ | ३२ |
| करण्डः | १ | १२९ | कवसः | ४ | २ | क्षान्तुः | ५ | ४३ |
| करुणा | ३ | ५३ | कश्मलम् | १ | १०९ | क्ष्मा | ५ | ६५ |
| करेणुः | २ | १ | कश्मीरः | ४ | ३२ | कासारः | ३ | १३९ |

| शब्दाः | पादः | सूत्रम् | शब्दाः | पादः | सूत्रम् | शब्दाः | पादः | सूत्रम् |
|---|---|---|---|---|---|---|---|---|
| कृतुः | ३ | ३० | कोमलम् | १ | १०९ | ग | | |
| कृत्तम् | ३ | ६६ | कोरकः | ५ | ३५ | गगनम् | २ | ७७ |
| कृत्स्नम् | ३ | १७ | क्रोष्टुः | १ | ६९ | गङ्गा | १ | १२३ |
| कृदरः | ५ | ४१ | कोशलः | १ | १०६ | गडेरः | १ | ५८ |
| कृन्तत्रम् | ३ | १०९ | कोष्ठः | २ | ४ | गडोलः | १ | ६६ |
| कृपीटम् | ४ | १८५ | क्षोणिः | ४ | ४८ | गण्डः | १ | ११४ |
| कृपणः | २ | ७९ | क्षौमा | २ | ९४ | गण्डयन्तः | ३ | १२८ |
| कृपाणः | २ | ९० | क्षौमम् | १ | १४० | गण्डिः | ४ | ११८ |
| कृमिः | ४ | ११२ | ख | | | गण्डुः | १ | ७ |
| कृविः | ४ | ५६ | खजपम् | ३ | १४२ | गण्डूषः | ४ | ७८ |
| कृशानुः | ४ | २ | खजाकः | ४ | १३ | गण्डोलः | १ | ६६ |
| कृषिः | ४ | १२० | खट्वा | १ | १५१ | गतिला | १ | ५७ |
| कृषिः | ४ | १२७ | खड्गः | १ | १२४ | गदयित्नुः | ३ | २९ |
| कृषकः | २ | ३८ | खडूः | १ | ८२ | गन्त्री | ४ | १५९ |
| कृषिकः | २ | ४० | खड्डूः | १ | ८२ | गन्तुः | १ | ६९ |
| कृष्णः | ३ | ४ | खण्डः | १ | ११४ | गभीरः | ४ | ३५ |
| कृसरः | ३ | ७३ | खदिरः | १ | ५३ | गभस्तिः | ४ | १८० |
| केतुः | १ | ७४ | खनिः | ४ | १४० | गमथः | ३ | ११३ |
| क्रेणिः | ४ | ४८ | खनित्रम् | ४ | १६२ | गमी | ४ | ६ |
| क्लेदा | १ | १५९ | खरुः | १ | ३६ | गम्भीरः | ४ | ३५ |
| क्लेदुः | १ | १० | खर्जूः | १ | ८० | गर्गः | १ | १२८ |
| केलिः | ४ | ११८ | खर्जूरः | ४ | ९० | गरुडः | ४ | ४६ |
| केवलः | १ | १०६ | खलतिः | ३ | ११२ | गरुत् | १ | ९४ |
| केशः | ५ | ३३ | खष्पः | ३ | २८ | गर्त्तः | ३ | ८६ |
| क्षेत्रम् | ४ | १७० | खाटिः | ४ | १२५ | गर्दभः | ३ | ११२ |
| क्षेमम् | १ | १४० | खातम् | ४ | १६२ | ग्रन्थिः | ४ | १४० |
| कोकिलः | १ | ५४ | खिद्रः | २ | १३ | गर्भः | ३ | १५२ |
| कोटरः | ३ | १३१ | खिदिरः | १ | ५१ | गर्मुत् | १ | ९५ |
| कोटिः | ४ | ११८ | खुरः | २ | २८ | गर्वः | १ | १५५ |

| शब्दाः | पा॰ | सू॰ | शब्दाः | पा॰ | सू॰ | शब्दाः | पा॰ | सू॰ |
|---|---|---|---|---|---|---|---|---|
| पथिलः | १ | ५७ | परीरम् | ४ | ३० | पशुः | १ | २७ |
| पदाजिः | ४ | १३२ | पर्परीकः | ४ | १९ | पाकः | ३ | ४३ |
| पदातिः | ४ | १३२ | परिव्राट् | २ | ५९ | पाकः | ५ | ५३ |
| पद्मम् | १ | १४० | पर्वतः | ३ | ११० | पाकुकः | २ | ३० |
| पद्रः | २ | १३ | पर्वा | ४ | ११३ | पाजः | ४ | २०३ |
| पद्या | ४ | ११३ | प्रगल्वा | ४ | ११७ | पाण्डुः | १ | ३७ |
| पविः | ४ | १३९ | प्रशल्वरी | ४ | ११७ | पाणिः | ४ | १३३ |
| पन्थाः | ४ | १२ | प्रशास्ता | २ | ९५ | पातालम् | १ | ११७ |
| पन्नः | ३ | १० | पर्शुः | १ | ३३ | पातिः | ५ | ५ |
| पनसः | ३ | ११७ | पर्शुः | ५ | २७ | पात्रम् | ४ | १५९ |
| पपीः | ३ | १५९ | परशुः | १ | ३३ | पात्रम् | ४ | १७० |
| पपुः | १ | २२ | पर्षत् | १ | १३० | पाथः | ४ | २०४ |
| पम्पा | ३ | २८ | प्रस्थायी | ४ | ९ | पाथः | ४ | २०५ |
| पयः | ४ | १९० | परुः | २ | ११७ | पाथिः | २ | ११४ |
| पयोधाः | ४ | २३० | परुषः | ४ | ७५ | पादूः | १ | ८५ |
| प्रख्याः | ४ | २३३ | प्रहाणिः | ४ | ५१ | पापम् | ३ | २३ |
| पर्जन्यः | ३ | १०३ | परिहाणिः | ४ | ५१ | पाप्मा | ४ | १५१ |
| परिज्वा | १ | १५९ | प्रहिः | ४ | १३५ | पायुः | १ | १ |
| पर्णम् | ३ | ६ | प्रहेलिः | ४ | ११८ | पारुः | ४ | १०१ |
| पर्णसुट् | २ | २२ | प्रक्षः | १ | १५३ | पारक् | १ | १३६ |
| पर्णरुट् | २ | २२ | प्लक्षः | ३ | ६३ | प्राकर्षिकः | २ | ४१ |
| पर्णशुट् | २ | २२ | पलाण्डुः | १ | ३७ | प्राट् | २ | ५७ |
| पर्णसिः | ४ | १०७ | पलितम् | ५ | ३४ | प्राणथः | ३ | ११३ |
| प्रतिदिवा | १ | १५६ | पलितः | ३ | ९२ | प्राणन्तः | ३ | १२७ |
| प्रथितिः | ४ | १८३ | पललम् | १ | १०६ | प्रातः | ५ | ५९ |
| प्रथमः | ५ | ६८ | पलालम् | १ | ११८ | प्रापणिका | २ | ४१ |
| पर्पः | ३ | २८ | पल्वलः | ४ | १०७ | प्रावृट् | २ | ५७ |
| पर्पटः | ४ | ८१ | पवाका | ४ | १४ | पार्श्वम् | ५ | २७ |
| परमेष्ठी | ४ | १० | पविः | ४ | १३९ | पार्ष्णिः | ४ | ५२ |

| शब्दाः | पा० | सू० | शब्दाः | पा० | सू० | शब्दाः | पा० | सू० |
|---|---|---|---|---|---|---|---|---|
| विधुः | १ | २३ | वृशः | ४ | १०४ | शक्रः | २ | १३ |
| विधुरः | १ | ३९ | वृश्चिकः | २ | ४० | शकलम् | १ | ११२ |
| विपणिः | ४ | ११८ | वृषपः | ४ | १०० | शकुलः | १ | ४१ |
| विपिनम् | २ | ५२ | वृषा | १ | १५६ | शक्वा | ४ | ११३ |
| विप्रः | २ | २८ | वेणिः | ४ | ४८ | शक्वरी | ४ | ११३ |
| विल्वम् | ४ | ९५ | वेणुः | ३ | ३८ | शङ्कुः | १ | ३६ |
| विशिपः | ३ | १४५ | वेतनम् | ३ | १५० | शङ्खः | १ | १०२ |
| विशालः | १ | ११८ | वेत्रम् | ४ | १६७ | शण्ठः | ४ | १०४ |
| विश्वम् | १ | १५१ | वेतसः | ३ | ११८ | शण्डिलः | १ | ५४ |
| विश्वप्सन् | १ | १५९ | वेदिः | ४ | ११९ | शण्ढः | १ | ९९ |
| विश्वभोजाः | ४ | २३८ | वेधाः | ४ | २२५ | शतद्रुः | १ | ३५ |
| विश्ववेदाः | ४ | २३८ | वेनः | ३ | ६ | शतिः | ४ | १२२ |
| विषा | ४ | ३६ | वेन्ना | ३ | ८ | शत्रिः | ४ | ६७ |
| विष्टपः | ३ | १४५ | वेमा | ४ | १५० | शत्रुः | ४ | १०३ |
| विष्टरश्रवाः | ४ | २२७ | वेशन्तः | ३ | १२६ | शतेरः | १ | ६० |
| विष्णुः | ३ | ३९ | वेष्टम् | ४ | १६० | शद्रिः | ४ | ६५ |
| विश्वा | ४ | ३६ | वेष्पः | ३ | २३ | शपथः | ३ | ११३ |
| वीकः | ३ | ४० | वेहत् | २ | ८५ | शब्दः | ४ | ९७ |
| वीचिः | ४ | ७२ | वैजयन्तः | ३ | १२८ | शबलः | १ | १०५ |
| वीणा | ३ | १५ | व्योम | ४ | १५१ | शमठः | १ | १०० |
| वीध्रम् | २ | २६ | **श** | | | शमथः | ३ | ११३ |
| वीरः | २ | १३ | शकटः | ४ | ८१ | शम्बः | ४ | ९४ |
| वृकः | ३ | ४१ | शक्तिधरः | २ | २२ | शम्बुकः | ४ | ४१ |
| वृक्षः | ३ | ६६ | शकृत् | ४ | ५८ | शम्बूकः | ४ | ४१ |
| वृजनम् | २ | ८१ | शकुनः | ३ | ४९ | शमलम् | १ | ११२ |
| वृजिनम् | २ | ४७ | शकुनिः | ३ | ४९ | श्मश्रुः | ५ | २८ |
| वृत्रः | २ | १३ | शकुन्तः | ३ | ४९ | शयण्डः | १ | १२९ |
| वृद्धश्रवाः | ४ | २२७ | शकुन्तिः | ३ | ४९ | शयथः | ३ | ११३ |
| वृधसानः | २ | ८७ | शक्मा | ४ | १४७ | शयानकः | ३ | ८२ |

| शब्दाः | पा० | सू० | शब्दाः | पा० | सू० | शब्दाः | पा० | सू० |
|---|---|---|---|---|---|---|---|---|
| शयुः | १ | ७ | शष्पः | ३ | २८ | शिरीषः | ४ | २० |
| शयुनः | ३ | ६१ | शस्त्रम् | ४ | १६४ | श्लिकुः | १ | ३२ |
| शरिः | ४ | १२८ | शंस्ता | २ | ९४ | शिल्पम् | ३ | २८ |
| शरुः | १ | १० | शाकम् | ३ | ४३ | श्वित्रम् | २ | १३ |
| शर्करा | ४ | ३ | शादः | ४ | ९७ | शिवः | १ | १५३ |
| शरणम् | ३ | १०१ | श्यामः | १ | १४६ | शिश्विदानः | २ | ९२ |
| शरणिः | २ | १०२ | श्यामाकः | ४ | १५ | शिविरम् | १ | ५३ |
| शरत् | १ | १३० | शारिका | ४ | १२८ | शिशिरः | १ | ५३ |
| शरभः | ३ | १२२ | शारिः | ४ | १२८ | शिशुः | १ | २० |
| शर्म | ४ | १४५ | शार्ङ्गः | १ | १२७ | शीकरः | ३ | १३१ |
| शरिमा | ४ | १४८ | शार्दूलः | ४ | ९० | शीधुः | ४ | ३८ |
| शरीरम् | ४ | ३० | शालभञ्जिका | २ | ३२ | श्रीः | २ | ५७ |
| शर्वः | १ | १५५ | शालिः | ४ | १३० | शीरः | २ | १३ |
| श्रवणा | २ | ७८ | शालुः | १ | ५ | शीर्विः | ४ | ५४ |
| श्रवाय्यः | ३ | ९६ | शालूकम् | ४ | ४२ | शीलम् | ४ | ३८ |
| शर्वरी | २ | १२१ | शालूरः | ४ | ९० | शीवा | ४ | ११४ |
| शर्शरीकः | ४ | १९ | श्वा | १ | १५९ | शुकः | ३ | ४२ |
| शल्कम् | ३ | ४३ | शास्ता | २ | ९४ | शुचिः | ३ | १५५ |
| शल्कः | ४ | १०८ | शास्तिः | ४ | १८० | शुक्रः | २ | २८ |
| श्लक्ष्णम् | ३ | १९ | शिक्यम् | ५ | १६ | शुक्लम् | २ | २८ |
| शलाका | ४ | १४ | शिखा | ५ | २४ | शुचिः | ४ | १२० |
| शलभः | ३ | १२२ | शिग्रुः | ४ | १०२ | शुनकः | २ | ३२ |
| शल्यम् | ४ | १०७ | शिङ्घाणकः | ३ | ८३ | शुन्ध्युः | ३ | २० |
| शलिः | ४ | १२८ | शिङ्घाणम् | ३ | ८३ | शुभ्रम् | २ | १३ |
| शवः | ४ | १९३ | शितिः | ४ | १२२ | शुभ्रिः | ४ | ६५ |
| श्वयीचिः | ४ | ७१ | शिथिलः | १ | ५३ | शुल्वम् | ४ | ९५ |
| शवरः | ३ | १३१ | शिनिः | ४ | ५१ | शुष्कः | ३ | ४१ |
| शवसानः | २ | ८६ | शिरः | ४ | १९४ | शुष्णः | ३ | १२ |
| श्वसुरः | १ | ४४ | शिरिः | ४ | १४३ | शुष्मम् | १ | १४४ |

| शब्दाः | पा० | सू० | शब्दाः | पा० | सू० | शब्दाः | पा० | सू० |
|---|---|---|---|---|---|---|---|---|
| स्यूनः | ३ | ९ | **ह** | | | हालुः | १ | १ |
| स्यूमः | १ | १४४ | हतुः | ३ | ३० | हासाः | ४ | २२१ |
| स्यूः | २ | ५७ | हथः | २ | २ | हिङ्गुः | १ | ३६ |
| सूरः | २ | २४ | हन्ता | २ | ९४ | हिण्डीरः | ४ | ३० |
| सूरतः | ५ | १४ | हनुः | १ | १० | हिमम् | १ | १४७ |
| सूरिः | ४ | ६४ | हनूषः | ४ | ७३ | हिरण्ययम् | ५ | ४४ |
| सृकः | ३ | ४१ | हरिः | ४ | ११९ | हिरण्यरेताः | ४ | २२७ |
| सृणिः | ४ | १०४ | हरिणः | २ | ४६ | हिंसीरः | ५ | १८ |
| सृणिः | ४ | ४९ | हरेणुः | २ | १ | ह्रीका | ३ | ४८ |
| सृणीका | ४ | २३ | हरित् | १ | ९७ | ह्रीकुः | ३ | ८५ |
| सृत्वा | ४ | ११४ | हरितः | ३ | ९३ | ह्लीका | ३ | ४८ |
| सृदाकुः | ३ | ७८ | हरिद्रुः | १ | ३४ | ह्लीकुः | ३ | ८५ |
| सृदरः | ५ | ४१ | हरिमा | ४ | १४८ | हृदयम् | ४ | १०० |
| सृप्रः | २ | १३ | हर्यतः | ३ | ११० | हृषीकम् | ४ | १७ |
| स्पृहयाय्यः | ३ | ९६ | हर्षयित्नुः | ३ | २९ | हृषुः | १ | २३ |
| सेतुः | १ | ६९ | हर्षुलः | १ | ९६ | हेतुः | १ | ७३ |
| स्येनः | २ | ४६ | ह्रस्वः | १ | १५३ | हेम | ४ | १४५ |
| सेना | ३ | १० | हलिः | ४ | ११८ | हेमन्तः | ३ | १२९ |
| स्नेहा | १ | १५९ | हविः | २ | १०८ | हेलिः | ४ | ११८ |
| स्नेहुः | १ | १० | हंसः | ३ | ६२ | होता | २ | ९५ |
| सोमः | १ | १४० | हंसिका | ४ | १५४ | होत्रम् | ४ | १६८ |
| स्तोमः | १ | १४० | हस्तः | ३ | ८६ | होमः | १ | १४० |
| सोमः | ४ | १५१ | हस्वः | २ | १३ | होमा | ४ | १५१ |
| स्योनः | ३ | ९ | हान्तम् | ४ | १६० | होमी | ३ | ८४ |
| स्रोतः | ४ | २०२ | हानिः | ४ | ५१ | होलः | ४ | १०५ |
| | | | हारिः | ४ | १२५ | | | |

इति

# शुद्धिपत्रम् ॥

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६ | ० | अ०१ पा०१ | पा० १ |
| ६ | ८ | श्रुयते | शृणाति |
| ८ | ० | अ०१ पा०१ | पा० १ |
| १० | १० | कार्त्तिः | कौर्त्तिम् |
| १४ | २० | वुक् | वुँक् |
| १५ | ५ | कपिल | कपिलः |
| १९ | १३ | आमुष्मान् | आयुष्मान् |
| १९ | १६ | तनूः | धनूः |
| २२ | २९ | ज्ञान्ती | ज्ञाती |
| २३ | २९ | पंन्था | पन्था |
| २४ | ८ | ङः | ढः |
| २७ | २४ | भेषज | भेषज |
| ३२ | २ | हाथः | हृथः |
| ३५ | २२ | दम्नम् | दाम्नम् |
| ३६ | २१ | संकत्या | संमत्या |
| ४० | २ | स्त्येनः | श्येनः |
| ४० | १७ | या | वा |
| ४० | २७ | द्वति | द्रवति |
| ४२ | २१ | व्युत्यन्न | व्युत्पन्न |
| ४७ | २३ | ० | नारी |
| ५१ | २६ | लच्चणा | लक्षणा |
| ५५ | २७ | रञ्जकः | रङ्कः |
| ५७ | २६ | युवती | युवतिः |
| ८५ | २९ | वाणग्र | वाणाग्र |
| ८६ | ८ | मनते | मवते |
| ९३ | १९ | किथुनम् | मिथुनम् |
| ९४ | १ | १५९ | १५८ |
| ९४ | २२ | कादेशोवा | कदेशोवा |
| ९६ | १७ | अमितः | अमित्रः |
| ९६ | २० | क्रियये | क्रियते |
| ९८ | २४ | फागुनो | फाल्गुनो |
| ११२ | ० | पा० ४ | पा० ५ |
| ११४ | २२ | ४७ | १४७ |
| ११४ | ८३ | आपाणिक | आपणिकः |
| ११६ | ५५ | ९ | ९० |
| ११६ | ८१ | १०१ | १०८ |
| ११८ | ३२ | ४ | १ |
| १२० | ८ | ६० | १६० |
| १२० | ३१ | २६ | ९६ |
| १२४ | ५९ | धिषसा | धिषणा |
| १२५ | ८३ | ६४ | ६९ |
| १२७ | १९ | पालुः | पीलुः |
| १२९ | ६८ | मरिचिः | मरीचिः |
| १३१ | १५ | युवाः | युवा |
| १३१ | ५९ | २५ | १२५ |

इति

# ॥ अथ वेदाङ्गप्रकाशः ॥

तत्रस्थः ।

षोडशो भागः ॥

# निघण्टुः

## यास्कमुनिनिर्मितो वैदिककोषः

## श्रीमत्स्वामिदयानन्दसरस्वतीकृतशब्दानुक्रमणिकया सहितः ।

पण्डितज्वालादत्तशर्मणा संशोधितः

पठनपाठनव्यवस्थायां षोडशं पुस्तकम् ।

मुन्शी समर्थदान के प्रबन्ध से

वैदिकयन्त्रालयप्रयाग में मुद्रित हुआ ।



संवत् १९४० आश्विनकृष्णा २

पहली बार १००० पुस्तक छपे

मूल्य ॥)

# विषयसूचीपत्रम् ॥

इति

ओ३म्।

# निघण्टुर्वैदिककोशः।

---

## अथास्य भूमिका।

यह ग्रन्थ ऋग्वेदी लोगों के पठितव्य दश ग्रन्थों में है। विशेष कर वेद और सामान्य से लौकिक ग्रन्थों से भी संबन्ध रखता है। यह मूल और इस का भाष्य निरुक्त यह दोनों ग्रन्थ यास्क मुनि जी के बनाये हैं। सदा से चले आने से प्राचीन हैं। इस को बहुत पुस्तकों से मिला कर जो २ पुस्तकान्तरों में विशेष शब्द पाये वे नोट में धर दिये हैं। अकारादि शब्द क्रम से इस की शब्दानुक्रमणिका भी बना कर छपवाई है कि जिस से जिस शब्द को देखना चाहे झटिति देख सकता है इस में पांच अध्याय हैं। उस के प्रथम अध्याय में १७ खण्ड द्वितीयाध्याय में २२ तृतीयाध्याय में ३० चतुर्थाध्याय ३ और पंचमाध्याय में ६ खंड हैं। इस की शब्दानुक्रमणिका में प्रथम अङ्क से अध्याय और द्वितीय से खंड समझना। तृतीय कोष्ठ में अकारादि शब्द और चतुर्थ में जिस का नाम है लिखा है। परन्तु यह सब शब्द वेद में यौगिक और योगरूढि आते हैं केवल रूढि नहीं। इस में जो पदनाम हैं वे पद धातु के गत्यर्थ अर्थात् ज्ञान गमन प्राप्त्यर्थ के वाचक हो कर यौगिक हो जाते हैं। यह ग्रन्थ सर्वत्र उपलब्ध नहीं था अब छपने से प्राप्त होने लगा है इस से बड़ा उपकार यह होगा। कि जो पुराण वालों ने अर्थ का अनर्थ किया है। सो इन आर्ष ग्रन्थों से निवृत्त हो कर सब के आत्मा में सत्य का प्रकाश होगा। निदर्शन जैसे पुराणी लोगों ने वृत्र शम्बर और

असुर शब्द से दैत्य निघंटुमें मेघ। पु० अहि शब्दसे सर्प नि० मेघ। पु० अद्रि गिरि तथा पर्वत से केवल पहाड़ नि०मेघ।पु० अश्मा, ग्रावा; शब्दोंसे पाषाण और नि०मेघ। पु०वराह से सुअर नि० मेघ। पु० धारा से जल का प्रवाह नि० वाणी । पु० गौरी से महादेव की स्त्री नि० वाणी पु० कर्मकाण्डी स्वाहा शब्द सेअग्नि की स्त्री और स्वधा शब्द से पितृ की स्त्री नि० स्वाहा वाणी और स्वधा से अन्न। पु० शची शब्दसे इन्द्र की स्त्री नि०में वाणी कर्म और प्रज्ञा का नाम है । पुराणीलोग शचीपति शब्द से देवों का राजा इन्द्र और वेद में वाणी कर्म और प्रज्ञा का पालन करने हारा स्वामी लिया जाता है। पु०गय शब्द से एक मृतकों के अर्थ पिण्डप्रदानार्थ स्थानविशेष और निघं० अपत्य,धन और गृह का नाम है।पु० घृताची शब्द से देवलोक की वेश्या विशेष स्त्री और नि० में रात्रि का नाम है। आज कल के लोग विप्र शब्द से केवल ब्राह्मण और निघंटु में बुद्धिमान् का नाम है।पु०श्रद्धा सेप्रीति और श्राद्ध से मृतकों की तृप्ति मानते हैं और नि० में श्रत् शब्द से सत्य और जिस क्रिया से सत्य का ग्रहण हो वह श्रद्धा और जो इस से धर्मयुक्त कर्म किया जाय सो श्राद्ध कहाता है अब कहां तक लिखें मनुष्य लोग जब इस कोश को पढ़ें गे तभी नवीन पुराणादि ग्रन्थों का मिथ्यापन और वेदों का सत्यत्व तथा वेदों के अर्थ करने में प्रवृत्ति अपने आप हो जायगी तब तक वेदार्थ में प्रवृत्ति नहीं होती और व्याकरणादि का पढ़ना निष्फल है। यद्यपि जहां तहां यंत्रालयों में निघंटु छपा है तथापि इस के छापने का मुख्य प्रयोजन यही है कि अकारादिशब्द क्रम से इस के साथ शब्दानुक्रमणिका ठिकाने के सहित छपवा दिई है कि जिस शब्द को निकालना चाहैं उस को शब्दानुक्रमणिका के अनुकूल देख के शीघ्र निकाल लेवें गे इस से जिस को

कंठस्थ ग्रन्थ न होगा वह भी शब्दानुक्रमणिका से लाभ ले सकेगा अलमतिविस्तरेण बुद्धिमद्वर्येषु ॥

इतिभूमिका समाप्ता ॥

निधि (९) रामा (३) ङ्क(६) चन्द्रे(१)ब्दे मार्गशीर्षसिते दले ॥
चतुर्थ्यां गुरुवारेयं निघंटुः शोधितोनघाः ॥ १ ॥

श्रीमन्महामहिमविक्रमभूपतेरेकोनचत्वारिंशदुत्तर
एकोनविंशतितमे संवत्सरे यन्त्रणाय मुनिवर
यास्कमुनिनिर्मितः सशब्दानुक्रमणिको
निघंटुः प्रेषितः ॥

स्थान महाराणा जी का उदयपुर

दयानन्दसरस्वती

---

# ॥ अथ निघण्टुः ॥
## प्रथमोऽध्यायः ॥

---

गौः । ग्मा । ज्मा । क्ष्मा । क्षा । क्षमा (१) । क्षोणिः (२) । क्षितिः । अवनिः । उर्वी । पृथ्वी । मही । रिपः (३) । अदितिः । इळा । निर्ऋतिः । भूः । भूमिः । पूषा । गातुः । गोत्रेत्येकविंशतिः पृथिवीनामधेयानि ॥ १ ॥

हेम (४) । चन्द्रम् । रुक्मम् । अयः । हिरण्यम् । पेशः । कृशनम् । लोहम् । कनकम् । काञ्चनम् । भर्म । अमृतम् । मरुत् । दत्रम् । जातरूपमिति पञ्चदश हिरण्यनामानि ॥ २ ॥

अम्बरम् । वियत् । व्योम । बर्हिः । धन्व । अन्तरिक्षम् । आकाशम् । आपः । पृथिवी । भूः । स्वयम्भूः । अध्वा । पुष्करम् । सगरः (५) । समुद्रः । अध्वरमिति षोडशान्तरिक्षनामानि ॥ ३ ॥

स्वः । पृश्निः । नाकः (६) । गौः । विष्टपम् । नभ इति षट् साधारणानि ॥ ४ ॥

खेदयः । किरणाः । गावः । रश्मयः (७) । अभीशवः । दीधितयः (८) । गभस्तयः । वनम् । उस्राः । वसवः । मरीचिपाः । मयूखाः । सप्तऋषयः । साध्याः । सुपर्णाः । इति पंचदश रश्मिनामानि ॥ ५ ॥

---

(१) इत्यस्यस्थाने । क्ष्मः । क्षामा । क्षामः । क्षाम । इति चत्वारः शब्दाः पुस्तकान्तरेषु क्वचित् २ दृश्यन्ते ॥ (२) क्वदिकारादक्तिन इति ङीषि सति क्षोणी । इत्यपि भवति ॥ (३) स्वरभेदेन रिपः, इत्यपि पु० २ दृश्यते ॥ (४) हेमाः, इत्यपि पु०२ ॥ (५) सगरम् । इति लिङ्गभेदेन पुस्तकान्तरपाठः ॥ (६) नाकाः । इति बहुवचनान्तः क्वचित् ॥ (७) रश्म्यः । इति ङीषि सति पु० २ ॥ (८) दिधीतयः । इत्यपि पुस्तकान्तरपाठः ॥

आताः । आशाः । उपराः । आष्ठाः । काष्ठाः । व्योम । ककुभः । हरितः । इत्यष्टौ दिङ्नामानि ॥ ६ ॥

श्यावी । क्षपा । शर्वरी । अक्तुः । ऊर्म्या । राम्या (१) । यम्या । नम्या । दोषा । नक्ता । तमः । रजः । असिक्नी । पयस्वती । तमस्वती । घृताची । शिरिणा (२) । मोकी । शोकी । ऊधः (३) । पयः । हिमा (४) । वस्वी (५) । इति त्रयोविंशती रात्रिनामानि ॥ ७ ॥

विभावरी । सूनरी । भास्वती । ओदती । चित्रामघा । अर्जुनी । वाजिनी । वाजिनीवती (६) । सुम्नावरी । अहना । द्योतना । श्वित्या । अरुषी (७) । सूनृता । सूनृतावती । सूनृतावरी । इति षोडशोषोनामानि ॥ ८ ॥

वस्तोः । द्युः (८) । भानुः । वासरम् । स्वसराणि । घ्रंसः । घर्मः । घृणः (९) । दिनम् । दिवा । दिवेदिवे । द्यविद्यवि । इति द्वादशाह्ननामानि ॥ ९ ॥

अद्रिः । ग्रावा । गोत्रः । बलः । अश्नः । पुरुभोजाः । वलिशानः (१०) । अश्मा । पर्वतः । गिरिः । व्रजः । चरुः । वराहः । शम्बरः । रौहिणः । रैवतः । फलिगः । उपरः । उपलः । चमसः । अहिः । अभ्रम् (११) । बलाहकः । मेघः । दृतिः (१२) ।

(१) रम्या इति पाठः ॥ (२) शीर्णा इत्यपि पु॰ २ (३) ऊधा । इत्यपि पु॰ २ ॥ (४) हिम इत्यपि पु॰ २ ॥ (५) वसु । वस्ता । वसी । इत्यपि पु॰ २ ॥ (६) वाजिनिवती । इत्यपि पु॰ ॥ (७) अरूषी इत्यपि पु॰ ॥ (८) द्यौ इति पा॰ ॥ (९) घृणिः इत्यपि पु॰ ॥ (१०) पशानः । पर्णानः । इमावपि क्वचित् ॥ (११) अभ्वम् इत्यपि पु॰ ॥ (१२) दृत्तिः इति च पु॰ ।

ओदनः (१) । वृषन्धिः (२) । वृत्रः । असुरः । कोशः । इति
त्रिंशन्मेघनामानि ॥ १० ॥

श्लोकः । धारा । इळा । गौः । गौरी । गान्धर्वी । गभीरा ।
गम्भीरा । मन्द्रा । मन्द्राजनी । वाशी । वाणी । वाणीची ।
वाणः । पविः । भारती । धमनिः । नाळीः (३) । मेळिः । मेना ।
सूर्या । सरस्वती । निवित् । स्वाहा । वग्नुः (४) । उपब्दिः । मायुः ।
काकुत् (५) । जिह्वा । घोषः । स्वरः । शब्दः । स्वनः । ऋक् ।
होत्रा । गीः । गाथा । गणः (६) । धेना । ग्नाः । विपा (७) ।
नना । कशा । धिषणा । नौः । अक्षरम् । मही । अदितिः ।
शची । वाक् । अनुष्टुप् । धेनुः । वल्गुः (८) । गल्दा (९) । सरः ।
(१०) । सुपर्णी (११) । वेकुरा (१२) । इति सप्तपंचाशद्
वाङ्नामानि ॥ ११ ॥

अर्णः । क्षोदः । क्षद्म (१३) । नभः । अम्भः । कबन्धम् (१४) ।
सलिलम् । वाः । वनम् । घृतम् । मधु । पुरीषम् । पिप्पलम् ।
क्षीरम् । विषम् । रेतः । कशः (१५) । जन्म (१६) । बृबूकम् ।
बुसम् । तुग्र्या बर्बुरम् (१७) । सुक्षेम (१८) । धरुणम् ।

(१) ओदनम् । इति नपुंसकम् पु० ॥ (२) विषन्धिः । इत्यपि पु० ॥
(३) नालिः । नीलिः । इमौ क्वचित् ॥ (४) गग्नु । इति क्वचित् ॥
(५) काकुप् इति पु० ॥ (६) गणा । इति पु० (७) मंग्ना, इति पु०॥ (८) वग्नुः ।
इति पु० ॥ (९) गल्दः । गल्दाः । इमौ पु०॥ (१०) रसः । रासः । इमौ च पु० ॥
(११) सुपर्णा, इति च पु० ॥ (१२) वेकु, इति पु०॥ (१३) चद्मा । चद्मः । चन्म । इमे
त्रयः पु० ॥ (१४) कवन्धम् । इति वकारभेदेन क्वचिद् दृश्यते ॥ (१५) ग्रकम् । पु०॥
(१६) जह्म । जह्मा । इमावस्यैव स्थाने पु० दृश्यते ॥ (१७) वुवुरम् । वुवुरः । इमौ च
तद्वत् ॥ (१८) सुक्षेमा । सुक्षोम । एतौ च ॥

सिरा (१)। अरिन्दानि (२)। ध्वस्मन्वत्। जामि (३)। आयुधानि। क्षपः। अहिः। अक्षरम् (४)। स्रोतः। तृप्तिः। रसः। उदकम् (५)। पयः। सरः। भेषजम्। सहः। शवः। यहः। ओजः। सुखम्। क्षत्रम्। आवयाः। शुभम्। यादुः (६)। भूतम्। भुवनम्। भविष्यत्। महत्। आपः। व्योम। यशः। महः। सर्णीकम् (७)। स्वृतीकम् (८)। सतीनम् (९)। गहनम्। गभीरम् (१०)। गम्भरम् (११)। ईम् (१२)। अन्नम्। हविः। सद्म। सदनम्। ऋतम्। योनिः। ऋतस्ययोनिः। सत्यम्। नीरम्। रयिः। सत्। पूर्णम्। सर्वम्। अक्षितम्। बर्हिः। नाम। सर्पिः। अपः। पवित्रम्। अमृतम्। इन्दुः। हेम (१३)। स्वः। सर्गाः। शम्बरम्। अभ्वम्। वपुः। अम्बु (१४)। तोयम्। तूयम्। कृपीटम् (१५)। शुक्रम्। तेजः। स्वधा। वारि। जलम्। जलाषम्। इदम्। इत्येकशतमुदकनामानि ॥ १२ ॥

अवनयः। यव्याः (१६)। खाः। सीराः। स्रोत्याः। एन्यः। धुनयः। रुजानाः। वक्षणाः। खादोअर्णाः। रोधचक्राः। हरितः। सरितः। अग्रुवः। नभन्वः (१७)। वध्वः। हिरण्यवर्णाः। रोहितः।

---

(१) सुरा। सुरा। इतिपु० ॥ (२) अररिदानि। इतिपु० ॥ (३) जामिः। जामिवत्। इतिपु० ॥ (४) अचरः। अचराः। इति पाठान्तरम् ॥ (५) पयः। इत्यपि पु० ॥ (६) यादः इति क्वचित् पु० ॥ (७) स्वर्णीकम्। इति पु० ॥ (८) सतीकम्। सृतीकम्। इति पु० ॥ (९) सतिनम्। पु० ॥ (१०) गम्भीरम्। इति पु० ॥ (११) गह्वरम्। इति पु० ॥ (१२) कम्। इत्यधिकं क्वचित् पु० ॥ (१३) हेमा इति पु० ॥ (१४) अम्बुः, इति लिङ्गभेदेन क्वचित् ॥ (१५) तृपीटम्। नृपीटम्। इति पुस्तकान्तरपाठः ॥ (१६) यह्वाः। इति पु० ॥ (१७) नभन्वाः, इति मात्राभेदेन पु० ॥

सस्रुतः । अर्णाः । सिन्धवः । कुल्याः । वर्यः (१) । उर्व्यः । इरावत्यः । पार्वत्यः (२) । स्रवन्त्यः (३) । ऊर्जस्वत्यः । पयस्वत्यः । सरस्वत्यः । तरस्वत्यः । हरस्वत्यः । रोधस्वत्यः । भास्वत्यः । अजिराः मातरः । नद्यः । इति सप्तत्रिंशन्नदीनामानि ॥ १३ ॥

अत्यः । हयः । अर्वा । वाजी । सप्तिः । वह्निः । दधिक्राः । दधिक्रावा । एतग्वः (४) । एतशः । पैद्वः । दौर्गहः । औच्चैःश्रवसः (५) । तार्क्ष्यः । आशुः । ब्रध्नः । अरुषः । मांश्चत्वः (६) । अव्यथयः (७) । श्येनासः । सुपर्णाः । पतङ्गाः । नरः । ह्वार्याणाम् (८) । हंसासः । अश्वाः । इति षड्विंशतिरश्वनामानि ॥ १४ ॥

हरी इन्द्रस्य । रोहितोऽग्नेः । हरित आदित्यस्य । रासभावश्विनोः । अजाः पूष्णः पृषत्यो मरुताम् । अरुण्यो गाव उषसाम् । श्यावाः सवितुः । विश्वरूपा बृहस्पतेः । नियुतो वायोः । इति दशाऽऽदिष्टोपयोजनानि ॥ १५ ॥

भ्राजते । भ्राशते (९) । भ्राश्यति । दीदयति । शोचति । मन्दते । भन्दते । रोचते । द्योतते । ज्योतते द्युमत् । इत्येकादश ज्वलतिकर्माणः ॥ १६ ॥

जमत् । कल्मलीकिनम् । जञ्जणाभवन् । मल्मलाभवन् । अर्चिः । शोचिः । तपः । तेजः (१०) । हरः । घृणिः (११) । शृङ्गाणि । इत्येकादश ज्वलतो नामधेयानि ॥ १७ ॥

गौर्हेमाम्बरं स्व१ः खेदय आताः श्यावी विभावरीवस्तोरद्रिः ग्लोकोऽर्णोऽवनयोऽत्यो हरीइन्द्रस्य भ्राजते जमदिति सप्तदश ॥

इति निघण्टौ प्रथमाध्यायः समाप्तः ॥

(१) ऋतावर्यः । इति पु० ॥ (२) वार्वत्यः । अर्वत्यः । इमौ पा० ॥ (३) रेवत्यः । इति पु० ॥ (४) एतग्वा इति पु० ॥ (५) उच्चैःश्रवसः । इति पु० ॥ (६) मंश्चतो । मंश्चतुः । इति पा० ॥ (७) व्यथयः । इति पा० ॥ (८) वार्याणाम् । इति पाठान्तरम् ॥ (९) भ्लाश्यति । भ्लाशते । भ्लाश्यते । इमे पुस्तकान्तरेषु दृश्यन्ते ॥ (१०) पयः । इति पु० ॥ (११) ह्वर्णिः । हर्णिः । इति पाठभेदः ॥

# अथ द्वितीयाध्यायारम्भः ।

अपः । अप्नः । दंसः । वेषः । वेपः (१) । विष्ट्वी । व्रतम् । कर्वरम् । शक्म (२) । क्रतुः । करणाम् (३) । करणानि । करांसि । करन्ती (४) । करिक्रत् । चक्रत् (५) । कर्त्वम् (६) । कर्त्तोः । कर्त्तवै । कृत्वी । धीः । शची । शमी । शिमी । शक्तिः । शिल्पमिति षड्विंशतिः कर्मनामानि ॥ १ ॥

तुक् । तोकम् । तनयः (७) । तोक्म । तक्म । शेषः । अप्नः । गयः । जाः । अपत्यम् । यहुः । सूनुः । नपात् । प्रजा । बीजम् । इति पंचदशापत्यनामानि ॥

मनुष्याः । नरः (८) । धवाः । जन्तवः । विशः । क्षितयः । कृष्टयः । चर्षणयः । नहुषः (९) । हरयः । मर्याः । मर्त्याः । मर्त्ताः । व्राताः । तुर्वशाः । द्रुह्यवः । आयवः (१०) । यदवः । अनवः । पूरवः । जगतः । तस्थुषः । पञ्चजनाः । विवस्वन्तः । पृतनाः । इति पंचविंशतिर्मनुष्यनामानि ॥ ३ ॥

आयती । च्यवाना । अभीशु । अप्नवाना । विनङ्गृसौ । गभस्ती । कुरस्नौ । बाहू । भुरिजौ । क्षिपस्ती (११) । शक्वरी । भरित्रे । इति द्वादश बाहुनामानि ॥ ४ ॥

---

(१) वेशः । विष्टी । इति पुस्तकान्तर० ।(२) शग्म । शक्म् । अस्यैव भेदः पु० ॥(३) करणम् । इति पु० ॥(४) कुरन्ति । इति पु० ॥(५) चक्रतुः । इति पु० ॥ (६) कर्तुम् । इति पाठभेदपु० ॥ (७) तनयम् । इति लिङ्गभेदेन क्वचित् पु० ॥ (८) नराः । इति पुस्तकान्तरेषु ॥ (९) नहुषाः । इति वचन भेदेन क्वचित् पाठः ॥ (१०) अयवः । इति पु० ॥ (११) क्षिपती । क्षिपन्ती । इति पु० ॥

अग्रुवः । अण्व्यः (१)। विशः (२) । क्षिपः । शर्यः ।
रशनाः । धीतयः । अथर्यः (३) । विपः । कक्ष्याः । अवनयः ।
हरितः (४)। स्वसारः । जामयः । सनाभयः । योक्त्राणि ।
योजनानि । धुरः । शाखाः । अभीशवः । दीधितयः । गभस्तयः
(५) । इति द्वाविंशतिरङ्गुलिनामानि ॥ ५ ॥

उश्मि । उश्मसि (६) । वेति । वेनति । वेसति (७) ।
वाञ्छति । वष्टि (८) । वनोति । जुषते । हर्यति (९) । आचके ।
उशिक् । मन्यते । छन्त्सत् (१०) । चाकनत् । चकमानः । कनति ।
कानिषत् । इत्यष्टादश कान्तिकर्माणः ॥ ६ ॥

अन्धः (११) । वाजः । पयः । प्रयः (१२) । पृक्षः । पितुः । वयः ।
सुतः (१३) । सिनम् (१४) । अवः । क्षु (१५) । धासिः । इरा । इळा ।
इषम् । ऊर्क् । रसः । स्वधा । अर्कः । क्षद्म (१६) । नेमः । ससम् ।
नमः । आयुः । सूनृता । ब्रह्म । वर्चः । कीलालम् । यशः । इत्य-
ष्टाविंशतिरन्ननामानि ॥ ७ ॥

आवयति । भर्वति । बभस्ति । वेति । वेवेष्टि । अविष्यन् ।
बप्सति । भसथः । बब्धाम् । ह्वरति (१७) । इतिदशात्तिकर्माणः ॥ ८ ॥

(१) विभ्वाः, इत्यधिकं क्वचित् पु० ॥ (२) द्रशः । इति पाठान्तरम् ॥ (३) अथर्यवः ।
अथर्याः इति पाठान्तरम् ॥ (४) रोहितः, इति क्वचित् पाठः ॥ (५) सुहस्त्यः । सुस्तुतः ।
अस्यैव स्थाने इमौ लभ्येते पु० ॥ (६) इतोऽग्रे, अववेति, इत्यधिकं पुस्तकान्तरेषु ॥
(७) विसति । वेशति । इति पुस्तकान्तरपाठः ॥ (८) वेष्टि, इति क्वचित् पु० ॥
(९) ईयर्षि । उशत् । इमावधिकौ पुस्तकान्तरेषु ॥ (१०) शंसनत् । इति पु० ॥
(११) पाजः । इत्यधिकं क्वचित् पु० ॥ (१२) अवः, इति क्वचित् पु० ॥ (१३)
सुतम् इति लिङ्गभेदेन दृश्यते पु० ॥ (१४) सीनमिति पु० ॥ (१५) क्षुमत् ॥
क्षुत् । इत्येतौ क्षु, इत्यस्यैव स्थाने दृश्येते पुस्तकान्तरेषु ॥ (१६) क्षद्मः । इति पु० ।
(१७) ह्वयति, इति पु० ॥

ओजः (१)। पाजः । शवः । तरः । तवः । त्वक्षः । शर्द्धः (२)। बाधः । नृम्णम् । तविषी । शुष्मम् । शुष्णम् । शूषम् । दक्षः । वीळु । च्यौत्नम् । सहः । यहः । बधः । वर्गः । वृजनम् । वृक् (३) । मज्मना । पौंस्यानि । धर्णसिः (४) । द्रविणम् । स्यन्द्रासः । शम्बरम् । इत्यष्टाविंशतिर्बलनामानि ॥ ९ ॥

मघम् । रेक्णः । रिक्थम् । वेदः । वरिवः । श्वात्रम् । रत्नम् । रयिः । क्षत्रम् । भगः । मीढुम् (५) । गयः । नृम्णम् । द्युम्नम् । तना । बन्धुः । इन्द्रियम् । वसु । रायः । राधः । भोजनम् । मेधा । यशः । ब्रह्म । द्रविणम् (६) । श्रवः । वृत्रम् (७) । वृतम् । इत्यष्टाविंशतिरेव धननामानि ॥ १० ॥

अघ्न्या । उस्रा । उस्रिया । अही मही । अदितिः (८)। इळा । जगती शक्वरी । इति नव गोनामानि ॥ ११ ॥

रेळते । हेळते । भामते । भृणीयते (९) । भ्रीणाति । भ्रेषति । दोधति । वनुष्यति । कम्पते । भोजते । इति दश क्रुध्यतिकर्माणः ॥ १२ ॥

हेळः । हरः । हृणिः (१०)। त्यजः । भामः । एहः । ह्वरः (११)। तपुषी । जूर्णिः । मन्युः । व्यथिः । इत्येकादश क्रोधनामानि ॥१३॥

वर्त्तते । अयते । लोटते । लोठते । स्यन्दते (१२) । कसति ।

(१) वाजः इत्यधिकं क्वचित् पुस्तके ॥ (२) त्वर्त्तः, इति पु० ॥ (३) विट्, इति पाठान्तरम् ॥ (४) धर्णसि, इति प्रधानं पाठः ॥ (५) मोल्हम्, इति क्वचित् पु० ॥ (६) शवः । इत्यधिकं क्वचित् ॥ (७) ऋतम् । विरप्शम् । इतिपु० ॥ (८) अढितिः । इति पुस्तकान्तरपाठः ॥ (९) अस्यैव स्थाने हृणीयते, इति क्वचित् पु० ॥ (१०) घृणिः, इति चपु० ॥ (११) यरः, इति तस्यैव स्थाने पुस्त० । (१२) स्यन्दति । इति पु० ॥

सर्पति । स्यमति । स्रवति (१)। स्रंसति । अवति । स्रोतति । ध्वंसति । वेनति । मार्ष्टि । भुरण्यति । शवति । कालयति । पेलयति । कण्टति । पिस्यति । विस्यति । मिस्यति । प्रवते । प्लवते । च्यवते । कवते । गवते । नवते (२)। चोदति । नक्षति । सक्षति । म्यक्षति (३)। सचति (४)। ऋच्छति । तुरीयति । चतति । अतति । गाति । इयक्षति । सश्चति । त्सरति । रंहति । यतते । भ्रमति । ध्रजति । रजति । लजति । च्चियति । धमति । मिनाति (५)। ऋण्वति (६)। ऋणोति । स्वरति । सिसक्ति । विविष्टि (७)। योषिष्टि (८)। रिणाति (९)। रीयते । रेजति । दघ्रति (१०)। दभ्नोति (११)। युध्यति (१२)। धन्वति । अरुषति (१३)। आर्यति (१४)। सीयते (१५)। तकति (१६)। दीयति । ईषति । फणति (१७)। हनति (१८)॥ अर्दति । मर्दति । सस्रते । नसते । हर्यति । इयक्ति । ईङ्खति । ईङ्खते । ज्वयति । श्वात्रति । गन्ति । आगनीगन्ति । जगन्ति (१९)।

---

(१) स्रंसते । इति पाठश्च। (२) अवते। इत्यपि क्वचित् पु०॥ (३) मियक्षति । इत्यपि पु०॥ (४) अचति। इत्यपि०॥ (५)। मिनोति । च्चिणोति। इतिपु०॥ (६) रिखति । इत्यपि पु० ॥ (७) वेविष्टि। वेविष्टि। इति क्वचित् पु०॥ (८) योशिष्टि। इति च पु० ॥ (९) ऋणाति । ऋणति । ऋणक्ति। इति भेदः पुस्तकान्तरे॥ (१०) दध्यति । इतिभेदः। नख्यति। इत्यधिकं पु०॥ (११) दभ्नोति । इति पु० ॥ (१२) युध्यते । इति क्वचित् पाठः॥ (१३) अरुष्यति । अरर्षति। इतिपा०॥ (१४)। अलर्यति । अलर्षति । इति पाठान्तरम् ॥ (१५) डीयते । इति बहुमतः पाठः ॥ (१६) दीयते। इत्यपि क्वचित् पा०॥ (१७) अन कणति। इत्यपि क्वचित् पा०॥ (१८) सस्रति। सिस्रति । धवति । धावति । हम्मति । हस्यति । हर्यति इत्येतेऽधिकाः पुस्तकान्तरे॥ (१९) जङ्गन्ति इत्यपि पु० ॥

जिन्वति (१) । जसति । गमति । भ्रति । भ्राति । भ्रपति (२) । वहते (३) । रघर्यति । जेहते (४) । ष्वःकति (५) । च्युम्पति (६) । प्साति।वाति । याति । इषति (७) । द्राति (८) । द्रूक्ति । एजति । जमति । जवति । वञ्चति अनिति । पवते (९) । हन्ति । सेधति । अगन् । अजगन् । जिगाति । पतति । इन्वति । द्रमति (१०) । द्रवति (११) । वेति । हयन्तात् (१२) । एति । जगायात् । अयथुः (१३) ॥ इति द्वाविंशशतं गतिकर्माणः ॥ १४ ॥

नु । सच्चु । द्रवत् । ओषम् । जीराः (१४) । जूर्णिः (१५) । शूर्त्तोः । शूघनासः (१६) । शीभम् । तृषु (१७) । तूर्यम् (१८) । तूर्णिः (१९) । अजिरम् (२०) । भुरण्युः । शु (२१) । आशु । प्राशुः (२२) । तूतुजिः (२३) । तूतुजानः (२४) । तुज्यमानासः ।

---

(१) जगाति । जगति । इत्यपि कुचित् पु० ॥ (२) ध्रुवति इति पाठान्तरम् ॥ (३) । वल्गूयति । अघर्यति । इत्यधिकं क्वचित् पु० ॥ (४) जेहति, इतिभेदः । षर्दति । राति । रूल्हति इत्यधिकं कुचित् पुस्तकान्तरपाठः ॥ (५) षःकति । ष्वक्ति इति पु० ॥ (६) च्चिम्पति । इति पु० ॥ (७) । जायति इत्यधिकं क्वचित् पु० ॥ (८) पतयति इत्यप्यधिकं क्वचित् पु० ॥ (९) प्लवति इति पु० ॥ (१०) व्रजति इत्यधिकं कुचित् पु० ॥ (११) दूवति । द्रुमति । इति पाठान्तरम् ॥ (१२) यकाराभावे । हन्तात् । इति पु० ॥ (१३) अयुधुः । अयुधुः । इति तस्यैव भेदेन पाठः (१४) । जिरा इति पु० ॥ (१५) जूर्णीः । इति ङीष्भेदेन दीर्घान्तः पु० ॥ (१६) शूघनसाः । शूधनाः । शूघनाशः । इति तस्यैव भेदेन पाठान्तरम् ॥ (१७) त्रिपु । इति पु० (१८) । तीयम् । इति पा० (१९) । तूर्णि इति लिङ्गभेदेन पा० ॥ (२०) अजिरम् । इत्याद्युदात्तस्वरभेदेन क्वचित् पाठः ॥ (२१) शूः । आशुः । इति पूर्वापरयोर्भेदः पु० ॥ (२२) प्राशुचित् । प्राशुवित् । इति पाठान्त० ॥ (२३) । तूतुजित् इतिपाठान्तरम् ॥ (२४) तूतुजानासः । इति पा० ॥

अज्राः (१) साचिवित् । (२) द्युगत् (३) । ताजत्
तुरण्यः । वातरंहाः । इति षड्विंशतिः क्षिप्रनामानि ॥ १५ ॥

तळित् (४)। आसात् (५)। अम्बरम्। तुर्वशे (६
अस्तमीके। आके। उपाके। अर्वाके (७)। अन्तमानाम्
अवमे। उपमे। इत्येकादशान्तिकनामानि ॥ १६ ॥

रणः । विवाक् । विखादः । नदनुः । भरे । आक्रन्दे । आहवे
आजौ । पृतनाज्यम् । अभीके । समीके । ममसत्यम् । नेमधि
ता (८) सङ्काः । समितिः । समनम् । मीळ्हे । पृतनाः
स्पृधः । मृधः । पृत्सु । समत्सु । समर्ये । समरणे । समोहे । (९)समीथ
(१०) सङ्ख्ये । सङ्गे । संयुगे (११)। सङ्गथे । सङ्गमे
वृत्रतूर्ये । पृक्षे । आणौ (१२) शूरसातौ । वाजसातौ । समनीके
खले । खजे । पौंस्ये । महाधने । वाजे । अज्म । सद्म (१३
संयत् । संवतः (१४) इति षट्चत्वारिंशत्संग्रामनामानि॥ १७

इन्वति । नक्षति । (१५) आक्षाणः । आनट् । आष्ट
(१६)आपानः । अशत् । नशत् । आनशे । अश्नुते । इति दश
व्याप्तिकर्माणः ॥ १८ ॥

---

(१) अजराः।इति पा०॥ (२)साचीवित् । साचीवत्।इति पुस्तकान्त०॥ (३) युगत्
इति पु० ॥ (४) तलित् इति पा० ॥ (५) आसा । इति तकाराभावे तस्यैव भेदः
(६)तुर्वशः । इति पा० ॥ (७) अर्वाकः । इति पु० ॥(८) नेमधितिः । इति पा
(९) सम्मोहे इति पु० ॥ (१०) समिथे । सङ्खे इति पूर्वापरयोर्भेदेन पाठः
(११) इत्यस्मात् पूर्वं संयत् । इत्यधिकं क्वचित् पुस्तके ॥ (१२) मधने । इत्यधि
क्वचित् पु० ॥ (१३) अग्मन् । सग्मन् । स्पग्मन् । इत्येते ऽधिकाः पु० ॥ (१४
संवतम् । इति पाठान्तरम् ॥ (१५) ननक्षे इति पा० ॥ (१६) आष्ठ । आष्ट
आष्ठः । इति तस्यैव भेदः ॥

दभ्नोति (१)। श्नथयति। ध्वरति। धूर्वति। वृणक्ति। वृश्चति। क्षणोति (२)। कृन्तति। श्वसिति (३)। नभते (४)। अर्दयति। स्तृणाति। स्नेहयति (५) यातयति (६)। स्फुरति स्फुलति। निर्वपन्तु। अवतिरति। वियातः। आतिरत्। तळित् आखण्डल। दृणाति। रम्णाति। शृणाति। शम्नाति। तृणेढि। तार्ढि। निताशते (७)। निबर्हयति (८)। मिनाति। मिनोति। धमति (९)। इति त्रयस्त्रिंशद्वधकर्माणः॥ १९॥

दिद्युत्। नेमिः। हेतिः। नमः। पविः। सृकः। वृकः। वधः वज्रः। अर्कः (१०)। कुत्सः। कुलिशः। तुजः। तिग्मम् (११)। मेनिः। स्वधितिः। सायकः। परशुः। इत्यष्टादश वज्रनामानि॥ २०॥

इरज्यति। पत्यते। क्षयति (१२)। राजति। इति चत्वार ऐश्वर्यकर्माणः॥ २१॥

राष्ट्री। अर्यः। नियुत्वान्। इनइनः। इति चत्वारीश्वरनामानि॥ २२॥

अप्रस्तुङ्मनुष्यापत्यगुर्वो वशस्यन्त्यत्रोव यत्योजोमघमघ्न्यं रेक्ते हिक्गोवर्त्तते नुतळिद्दृणद्वन्वतिदभ्नोति दिद्युदिरज्यति राष्ट्रीति द्वाविंशतिः॥

॥ इति निघण्टौ द्वितीयाध्यायः समाप्तः॥

(१) श्नथति इत्यधिकं क्वचित् पु०। श्नयति। इति परस्य पाठान्तरम्॥ (२) क्षणस्ति। क्ष्णस्ति। इति पु०॥ (३) श्वसति। इति पा०॥ (४) नभति इति पु०॥ (५) स्नेहति इति पूर्वस्यैव भेदपाठः। अर्दति। मर्दति। इत्यधिकं क्वचित्॥ (६) यार्चति। यावति। इति पुस्तकान्तरपाठः॥ (७) नितोशते। नितोशयति इति भेदेन क्वचित् पाठः॥ (८) वर्हयति पु०॥ (९) जूर्वति। इत्यधिकं क्वचित्॥ (१०) अल्कः। इति पु०॥ (११) तुञ्जः। तिग्मः। इति पाठान्तरम्॥ (१२) क्षियति। इति क्वचित्पाठः।

# अथ तृतीयाध्यायारम्भः ।

---

उरु । तुवि । पुरु । भूरि । शश्वत् । विश्वम् । परीणसा । व्यानशिः । शतम् । सहस्रम् । सलिलम् (१) । कुवित् । इति द्वादश बहुनामानि ॥ १ ॥

ऋहन् (२) ह्रस्वः । निघृष्वः । (३) मायुकः । प्रतिष्ठा । कृधु (४) । वम्रकः । दभ्रम् (५) । अर्भकः । क्षुल्लकः । अल्पः (६) । इत्येकादश ह्रस्वनामानि ॥ २ ॥

महत् (७) । ब्रध्नः । ऋष्वः । बृहत् (८) । उक्षितः । तवसः । तविषः । महिषः । अभ्वः । ऋभुक्षाः । उक्षाः । विहायाः । यह्वः । ववक्षिथ । ववक्षसे । अम्भृणः । माहिनः । गभीरः । ककुहः (९) । रभसः । व्राधन् (१०) । विरप्शी । अद्भुतम् (११) । वंहिष्ठः (१२) । बर्हिषत् (१३) । इति पञ्चविंशतिर्महन्नामानि ॥ ३ ॥

गयः । कृदरः । गर्त्तः । हर्म्यम् । अस्तम् । पस्त्यम् । दुरोणे । नीळम् । दुर्य्याः । स्वसराणि । अमा । दमे । कृत्तिः । योनिः । सद्म । शरणम् । वरूथम् । छर्दिः । छदिः । छाया । शर्म । अज्म (१४) । इति द्वाविंशतिर्गृहनामानि ॥ ४ ॥

---

(१) सरिरम् । इति पुस्तकान्तरपाठः ॥ (२) रिहम् । ऋहम् । ऋहत् । इति पा० ॥ (३) त्रषमः । त्रिषमः । इत्यधिकौ पु० ॥ (४) क्रधुकः । ऋधुकः । इति पुस्तकान्तरपाठः ॥ (५) दहरकः । देहरकः । इमावधिकौ पु० ॥ (६) अल्पकम् । इति पा० ॥ (७) महः । इति पु० ॥ (८) तुग्रः । इत्यधिकः पु० ॥ (९) ककुहस्तिना । इति पाठभेदः ॥ (१०) व्राधम् । व्राधत् । इति पु० ॥ (११) अद्भुतः । इति लिंगभेदः ॥ (१२) बर्हिष्ठः । इति पु० ॥ (१३) बर्हिषि । इतिपु० ॥ (१४) वर्म । इति पु० ॥

दूरज्यति (१)। विधेम। सपर्यति। नमस्यति। दुवस्यति।
ऋध्नोति। ऋणद्धि। ऋच्छति। सपति (२)। विवासति।
इति दश परिचरणकर्माणः ॥ ५ ॥

शिम्बाता। शतरा। शातपन्ता। शर्म (३)। स्यूमकम्।
शेवृधम्। मयः। सुग्म्यम्। सुदिनम्। शूषम्। शुनम्। शग्मम्। (४)
भेषजम्। जलाषम्। स्योनम्। सुम्नम्। शेवम्। शिवम्। शम्।
कम्। इति विंशतिः सुखनामानि। ६ ॥

निर्णिक्। वव्रिः। वर्पः। वपुः (५)। अमतिः। अप्सः (६)।
प्सुः। अप्नः। पिष्टम्। पेशः। कृशनम्। मरुत्। (७) अर्जुनम्।
ताम्रम्। अरुषम्। शिल्पम् (८)। इतिषोडश रूपनामानि ॥ ७ ॥

अस्रेमा। अनेमा। अनेद्यः। (९) अनवद्यः। अनभिशस्ताः
(१०)। उक्थ्यः। सुनीथः। पाकः। वामः। वयुनम्। इति दश
प्रशस्यनामानि ॥ ८ ॥

केतः। केतुः। (११) चेतः। चित्तम्। क्रतुः। असुः। धीः।
शची। माया। वयुनम्। अभिख्या। इत्येकादशप्रज्ञानामानि ॥९॥

वट्। श्रत्। सत्रा। अद्धा। इत्था। ऋतम्। इति षट्
सत्यनामानि ॥ १० ॥

चिक्यत् (१२)। चाकनत् (१३)। आचक्ष्म (१४)। चष्टे। विचष्टे।
विचर्षणिः। विश्वचर्षणिः। अवचाकशत्। इत्यष्टौपश्यतिकर्माणः॥११॥

---

(१) इरध्यति। इतिपा० ॥ (२) शर्वति। इतिपा० ॥ (३) शिल्गुः। इति बहुमतः पा० ॥ (४) शग्म्यम्। इतिपा० ॥ (५) अपुः। इत्यधिकं क्वचित् ॥ (६) वप्सः। इतिपा० ॥ (७) प्सरः। इतिपा० ॥ (८) शर्ध्यम्। शिर्ध्यम्। इति पा० ॥ (९) अनिन्द्यः। इत्यधिकं पु० ॥ (१०) अनभिशस्तिः। इति सम्मतः पाठः ॥ (११) कुतुः। इतिपु०। (१२) चिक्येम्। पा०। (१३) चना। इतिपा० ॥ (१४) चाक्ष्म। अचक्ष्म। इतितस्यैव भेदः ॥

ह्निकम् । नुकम् । सुकम् । आह्निकम् । आकीम् । (१) नकिः । माकिः । नकीम् । आकृतम् । इति नवोत्तराणि पदानि सर्वपदसमाम्नायः ॥ १२ ॥

इदमिव । इदंयथा । अग्निर्न ये । चतुरश्चिद्दमानात् । ब्राह्मणाव्रतचारिणः । वृक्षस्य नु ते पुरुहूतवयाः । जारआभगम् । मेषोभूतो ३ भियन्नयः । तद्रूपः । तद्वर्णः । तद्वत् । तथा । इत्युपमाः ॥ १३ ॥

अर्चति । गायति । रेभति । स्तोभति । गूर्धयति गृणाति । जरते (२)। ह्वयते ( ३ )। नदति । पृच्छति । रिहति । धमति । कृपायति ( ४ )। कृपण्यति । पनस्यति (५ )। पनायते । वल्गूयति । मन्दते । भन्दति । छन्दति । छदयते ( ६ )। शशमानः रञ्जयति । रजयति । शंसति । स्तौति । यौति । रौति । नौति । भनति (७)। पणायति (८)। पणते । सपति (९)। पपृक्षाः (१०) महयति । वाजयति । पूजयति । मन्यते (११)। मदति । रसति । स्वरति । वेनति । मन्द्रयते ( १२ )। जल्पति ( १३ )। इतिचतुश्चत्वारिंशदर्चतिकर्माणः ॥ १४ ॥

---

( १ ) आकिम् । इति पाठान्तरम् ॥ (२) जरति । इति पु० ॥ ( ३ ) ह्वयति । पा० ॥ ( ४ ) कृपा । इति पा० ॥ ( ५ ) पणस्यति । पणायते । इति पूर्वापरयोर्भेदः ॥ ( ६ ) छदयति । इति पा० ॥ ( ७ ) भणति । इति णत्वभेदः ॥ ( ८ ) भणायते । इति भेदः ॥ ( ९ ) स्वपिति । इति पा० ॥ ( १० ) पिपृक्षाः । इति पा० ॥ ( ११ ) स्वदति । इत्यधिकं पु० ॥ (१२) कल्पते । इत्यधिकं पु० ॥ (१३) मन्त्रयते । वन्दते । इमावधिकौ पुस्तकान्तरे ॥

विप्रः । विग्रः । गृत्सः । धीरः । वेनः । वेधाः (१) । कण्वः । ऋभुः । नवेदाः । कविः । मनीषी । मन्धाता । विधाता । विपः । सनश्चित् । विपश्चित् । विपन्यवः । (२) । आकेनिपः (३) । उशिजः । कीस्तासः । अद्धातयः । मतयः । मतुथाः (४) । वाघतः (५) । इति चतुर्विंशति मेधाविनामानि ॥ १५ ॥

रेभः । जरिता । कारुः । नदः । स्तामुः (६) । कीरिः । गौः । सूरिः । नादः । छन्दः । स्तुप् (७) । रुद्रः । कृपण्युः । इति त्रयोदशस्तोतृनामानि ॥ १६ ॥

यज्ञः । वेनः अध्वरः । मेधः । विदथः । नार्यः । सवनम् (८) । होत्रा । इष्टिः । देवताता । मखः । विष्णुः । इन्दुः । प्रजापतिः । घर्मः । इति पंचदशयज्ञनामानि ॥ १७ ॥

भरताः (९) कुरवः । वाघतः । वृक्तबर्हिषः । यतस्रुचः । मरुतः । सबाधः । देवयवः इत्यष्टावृत्विङ्नामानि ॥ १८ ॥

ईमहे । यामि । मन्महे । दद्धि । शग्धि (१०) पूर्द्धि । रिरिड्ढि । मिमिड्ढि । मिमीहि । रिरीहि । पीपरत् । यन्तारः । यन्धि (११) इषुध्यति । मदेमहि । मनामहे । मायते । इति सप्तदश याच्ञाकर्माणः ॥ १९ ॥

---

(१) मेधः । इत्यधिकः पु० ॥ (२) विपन्युः । इति पु० ॥ (३) केनिपः । अयमधिकः पु० ॥ (४) मनुथाः ॥ (५) मेधाविनः । इत्यधिकं पु० ॥ (६) तानुः । इति पाठान्तरम् ॥ (७) सुत् इति पाठान्तरम् ॥ (८) नारी । अयमधिकः पु० ॥ (९) भारताः । इति पाठभेदः ॥ (१०) दुग्धि । इति पा० ॥ (११) यन्ति । इति पाठान्तरम् ॥

दाति । दाशति । दासति । राति । रासति । पृर्णा
पृणाति (२) । शिक्षति । तुञ्जति । मंहते । इति द
र्माणः ॥ २० ॥

परिस्रव (३) । पवस्व । अभ्यर्ष । आशिषः । इति
ऽध्येषणाकर्माणः ॥ २१ ॥

स्वपिति । सस्ति (४) । इति द्वौ स्वपितिकर्माणौ

कूपः । कातुः । कर्तः । वव्रः । काटः । खातः (५
क्रिविः (६) सूदः । उत्सः । ऋश्यदात् । कारोतरा
कुशयः । कीवटः । इति चतुर्दशकूपनामानि ॥ २३ ॥

तृपुः (८) । तक्वा (९) । रिभ्वा (१०) । रिपुः
रिहायः । तायुः । तस्करः । वनर्गुः । हुरश्चित् । मुषीवान्
चः । अघशंसः । वृकः । इति चतुर्दशैव स्तेननामानि ।

निण्यम् । सस्वः । सनुतः । ह्विरुक् । प्रतीच्यं
अपीच्यम् । इति षण् निर्णीतान्तर्हितनामधेयानि ॥

आके । पराके । पराचैः । आरे । परावतः । इति
नामानि ॥ २६ ॥

(१) पृर्णक्ति । इति पा० ॥ (२) इस्यति । इत्यधिकं पु० ॥ (
इति शकारभेदेन पाठः ॥ (४) स्वस्ति । इतिपा० ॥ (५
अयमधिकः पुस्तकान्तरे ॥ (६) क्रविः । इति पाठः ॥ (७
इति पाठः॥ (८) त्रिपुः । इति पाठः ॥ (९) रितक्वा । चि
इति पुस्तकान्तरपाठः ॥ (१०) रिह्वा । इतिपाठान्तरम् ॥ (११
इति पा० ॥

प्रत्नम् । प्रदिवः । प्रवयाः । सनेमि । पूर्व्यम् (१) । अह्नाय । इति षट् पुराणनामानि ॥ २७ ॥

नवम् । नूतम् । नूतनम् । नव्यम् । इदा । इदानीम् । इति षडेव नवनामानि ॥ २८ ॥

प्रपित्वे । अभीके । दभ्रम् । अर्भकम् । तिरः । सतः । त्वः । नेमः । ऋक्षाः । स्तृभिः । वम्रीभिः । उपजिह्विका । ऊर्दरम् । कृदरम् । रम्भः । पिनाकम् । मेना । ग्नाः । शेपः । वैतसः । अया । एना । सिषक्तु (२) । सचते । भ्यसते (३) रेजते । इति षड्विंशतिर्द्विश उत्तराणि नामानि ॥ २९ ॥

स्वधे (४) पुरन्धी । धिषणे । रोदसी (५) । क्षोणी । अम्भसी । नभसी । रजसी । सदसी । सद्मनी । घृतवती । बहुले । गभीरे । गम्भीरे । ओण्यौ । चम्वौ (६) पार्श्वौ (७) मही । उर्वी । पृथ्वी (८) । अदिती । अह्नी । दूरेअन्ते । अपारेअपारे । इति चतुर्विंशतिर्द्यावापृथिवीनामधेयानि ॥ ३० ॥

उर्व्यृ१ हन्महद्गयद्रज्यतिशिम्बातानिर्णिगस्मेमाकितुर्वट्चिक्यद्विकमिदसिवार्चतिविप्रोरेभोयक्षोभरताईमहेदातिपरिस्रवस्वपितिकूपस्तृपुर्निण्यमाकिप्रत्नन्नवम्प्रपित्वेस्वधेत्रिंशत् ॥

इति निघण्टौ तृतीयाऽध्यायः समाप्तः ॥

(१) पूर्वा । इति पा० ॥ (२) सिषक्ति । इति पा० ॥ (३) नंसते । इत्यधिकं पु० ॥ (४) सुधे । इति पु० ॥ (५) रोधसी । इति वर्णभेदेनाधिकं वा पु० ॥ (६) अतः पूर्वं नप्त्री । इत्यधिकं क्वचित् । अतोऽग्रे च चुम्वी । इति भेदपाठः ॥ (७) पार्श्वे । इति पा० ॥ (८) बृहती । इत्यधिकमत्र पुस्तकान्तरे ॥

